Gaekwad's Oriental Series
Published under the Authority
of the Maharaja Sayajirao
University of Baroda, Baroda

General Editor :
A. N. Jani,
M.A., Ph.D., D.Litt.,
Kāvyatīrtha,
Director, Oriental Institute,
Baroda

No. 167

भट्टश्रीलक्ष्मीधरविरचिते

# कृत्यकल्पतरौ

नवमो भागः

॥ प्रतिष्ठाकाण्डम् ॥

Gaekwad's Oriental Series
Published under the Authority
of the Maharaja Sayajirao
University of Baroda, Baroda

General Editor :
A. N. Jani,
M.A., Ph.D., D.Litt.,
Kāvyatīrtha,
Director, Oriental Institute

No. 167

भट्टश्रीलक्ष्मीधरविरचिते

# कृत्यकल्पतरौ

नवमो भागः

॥ प्रतिष्ठाकाण्डम् ॥

# KṚTYAKALPATARU

OF

## BHAṬṬA LAKṢMĪDHARA

Vol. IX

## PRATIṢṬHĀKĀṆḌA

Edited by

LATE K. V. RANGASWAMI AIYANGAR

Oriental Institute
BARODA
1979

First Edition : 1979
Copies : 500

Published with the Financial Aid of the University Grants Commission, the Government of Gujarat and the M. S. University of Baroda.

Price : Rs. 53-00

*Copies can be had of :—*

***The Manager,***
**UNIVERSITY PUBLICATIONS SALES UNIT,**
**M. S. University of Baroda Press ( Sadhana Press ),**
**Near Palace Gate, Palace Road, Baroda-390 001**

---

Printed by Shri Bansilal M. Shah, Manager, The Maharaja Sayajirao University of Baroda Press ( Sadhana Press ), near Palace Gate, Palace Road, Baroda and published by Dr. A. N. Jani, Director, Oriental Institute, The Maharaja Sayajirao University of Baroda, Baroda, November, 1979.

## FOREWORD

I am pleased to put before the world of Scholars the ninth Volume of the *Kṛtyakalpataru* which presents *Pratiṣṭhā-kāṇḍa*. So far we have published the following eleven volumes of the *Kṛtyakalpataru* :

| *Vol.* | *GOS No.* | | *Year* |
|---|---|---|---|
| I | 106 | *Brahmacārī-kāṇḍa* | 1948 |
| II | 101 | *Gṛhastha-kāṇḍa* | 1944 |
| III | 111 | *Niyatakāla-kāṇḍa* | 1956 |
| IV | 110 | *Śrāddha-kāṇḍa* | 1950 |
| V | 92 | *Dāna-kāṇḍa* | 1941 |
| VI | 123 | *Vrata-kāṇḍa* | 1953 |
| VIII | 98 | *Tīrthavivecana-kāṇḍa* | 1942 |
| X | 112 | *Śuddhi-kāṇḍa* | 1950 |
| XI | 100 | *Rājadharma-kāṇḍa* | 1944 |
| XII | 119 | *Vyavahāra-kāṇḍa* | 1953 |
| XIV | 102 | *Mokṣa-kāṇḍa* | 1945 |

Volume five, called the *Dāna-kāṇḍa* of the *Kṛtyakalpataru*, was edited in 1941 by Shri K. V. Rangaswami Aiyangar as GOS No. 92 to be the first volume in the Series or volumes of the *Kṛtyakalpataru*. In the Introduction to this volume the editor presented a scheme of arrangement of the different *kāṇḍa*s of the *Kṛtyakalpataru* (see p. 18 of the Introduction). According to that scheme the *Vrata-kāṇḍa* ( GOS No. 123 ) was to be published as the ninth volume ( नवमो भाग: ); however, it was called the sixth volume ( षष्ठो भाग: ) by the same editor. The The reason for this apparent anomaly is found in the Introduction to the ninth volume ( GOS No. 123 ), p. 6, wherein the editor remarks: " Mr. Katre added that his institution had recently purchased an old manuscript of *Vrata-kāṇḍa* in which it was described as the sixth *kāṇḍa* of the *Kṛtyakalpataru* ". Thus the *Vrata-kāṇḍa* originally designed to be the ninth volume was published as the sixth. Hence, the present volume, namely *Pratiṣṭhā-kāṇḍa*, originally designed to be published as the sixth volume is published as the ninth volume.

I thank the University Grants Commission and the Government of Gujarat for giving financial help towards the publication of this volume.

I also thank my colleague Shri B. P. Pandya, Research Officer, for carefully going through the proofs of the present volume.

In addition, I express my gratitude to Shri Bansilal M. Shah, Manager, and other members of the M. S. University Press for taking personal interest in expediting the publication of the present volume.

Oriental Institute, Baroda.
June 8, 1969

A. N. Jani
Director

# विषय-सूची

श्रीः

श्रीगणेशाय नमः ॥[1]

श्रीलक्ष्मीधरविरचितः

# कृत्यकल्पतरुः ।

## प्रतिष्ठाकाण्डम् ।

### तत्र [2]प्रासादादिफलम्

**तत्र यमः**—

कृत्वा देवकुलं [3]शुभ्रं प्रतिष्ठाप्य च देवताम् ।
विधाय विविधं चित्रं तल्लोकं विन्दति[4] ध्रुवम् ॥

**विष्णुः**— [९१, १०–१२]

यस्य देवस्यायतनं करोति [5]तस्य लोकमाप्नोति ।
सुधासिक्तं कृत्वा यशसा विराजते ।
[6]चित्रं कृत्वा गन्धर्वलोकमाप्नोति[7] ।

**भविष्यपुराणे**[8]—

यस्तु देवालयं भानोर्दारुशैलमयं तथा ।
कारयेन्मृन्मयं वापि तस्य पुण्यफलं [9]हरेत् (रे) ॥

---

Manuscripts used: 'ड' मूलमातृका उदयपुर-राजकीयभाण्डारस्था; 'ने' इति नेपालकोशः; 'क' इति वङ्गलिपिमातृका, वङ्गीयसाहित्यपरिषदि धृता; 'स' इति काश्यां सरस्वतीभवनमातृका।

१ ओंनमो नारायणाय–क. २ प्रासादादि–क. ३ सर्वं–क. ४ विदन्ते–क. ५ तस्यैवलो–क; "देवायतनकारो यस्य देवस्यायतनं करोति तस्यैव लोकमाप्नोति" इति मुद्रित वि. स्मृ. ed. Jolly p. 188. ६ त्रिचित्रं–क; मु. वि. स्मृ. ७ °कमवाप्नोति–क. ८ °णे ब्रह्मोवाच–क; '°णे' ब्रह्मोवाच–स. ९ पुरे. क.; हरे–स.

अहन्यहनि यज्ञेन यजतो यन्महाफलम्[1] ।
[2]तत्फलं लभते भानोर्यः कारयति मन्दिरम्[3] ॥

सप्तलोकमयो भानुस्तस्य यः कुरुते गृहम् ।
प्रतिष्ठां समवाप्नोति स नरः साप्तलौकिकीम् ॥

प्रशस्तदेशभूभागे प्रशस्तं भवनं रवेः ।
कारयित्वाऽक्षयांल्लोकान् स नरः प्रतिपद्यते ॥

इष्टकाचयविन्यासो यावद्वर्षाणि तिष्ठति ।
तावद्वर्षसहस्राणि तत्कर्तुर्दिवि संस्थितिः[4] ॥

तथा

भक्त्या वित्तानुसारेण यः कुर्यादालयं रवेः ।
आग्नेयं[5] यानमारुह्य मोदते स हि भानुना ॥

अल्पे महति वाऽनल्पं[6] फलमाढ्यदरिद्रयोः[7] ॥

मृन्मयात्कोटिगुणितं फलं स्याद्दारुभिः कृते ।
कोटिकोटिगुणं पुण्यं फलं स्यादिष्टकामये ॥

द्विपरार्द्धगुणं पुण्यं शैलजे तु विदुर्बुधाः ।
मृच्छैलयोः समं ज्ञेयं पुण्यमाढ्यदरिद्रयोः ॥

यत्र तत्र गतः कुर्याद्बालभावेऽर्कमन्दिरम् ।
सोऽर्कलोकमवाप्नोति विमानवरमाश्रितः ॥

---

१ हृत्फलम्–क, स. २ प्राप्नोति तत्फलं भानोः–क. ३ °रम् ।
कुलानां शतमागामि समतीतं तथा शतम् ।
भावयन् भगवद्दा( द्धा )म व्रजत्यर्कसलोकताम् ॥
सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ।
भानोरालयविन्यासप्रारम्भादेव नश्यति ॥
तथा–सप्तलोक–क.
४ °तिः भक्त्या क. ५ ययान–क. ६ तुल्यं–क, स. ७ मोद्यपरि–क; माढ्यदरिद्रयोः स.

अप्सरोगणसंकीर्णं सर्वकामसुखप्रदम्[1] ।
तत्रारूढो महाराज मोदते शाश्वतीः समाः ॥

उषित्वा भास्करपुरे पूज्यमानस्तु दैवतैः ।
क्रमादागत्य लोकेस्मिन् राजा भवति धार्मिकः ॥

कारयेच्चित्रशास्त्रज्ञैश्चित्रकर्मार्कमन्दिरे ।
विचित्रं यानमारुह्य[2] चित्रभानोर्गृहं व्रजेत् ॥

[3]यावत्स देवरूपाणि [4]गृहरूपाणि लेखयेत् ।
तावद्युगसहस्राणि सूर्यलोके महीयते[5] ॥

प्रतिमां लक्षणवतीं[6] यः कारयति मानवः ।
दिवाकरस्य तल्लोकमक्षयं प्रतिपद्यते ॥

ये भविष्यन्ति येऽतीता [7]आकल्पा[ त् ] पुरुषाः कुले ।
तांस्तारयति संस्थाप्य देवस्य प्रतिमां रवेः ॥

[8]तथा ॥

मृद्दार्विष्टकशैलाढ्यं यः कुर्याद्ब्रह्मणो गृहम् ।
त्रिसप्तकुलसंयुक्तो ब्रह्मलोके महीयते ॥

मृन्मयात्कोटिगुणितं मृद्दार्विष्टकनिर्मिते ।
ऐष्टिकाद्[9] द्विगुणं पुण्यं कृते शैलमये गृहे ॥

क्रीडमानोऽपि यः कुर्याच्छालां यो ब्रह्मणो नृपः ।
ब्रह्मलोके स लभते विमानं सर्वकामदम् ॥

तथा ॥

सर्वयज्ञतपोदानतीर्थवेदेषु यत्फलम् ।
तत्फलं कोटिगुणितं लभेद्वेधःप्रतिष्ठया ॥

---

१ °फलप्रदम्–क. २ नेपालकोशे प्रथमपत्रस्य लुप्तत्वात् द्वितीयपत्रारम्भे, '°रूह्य चित्रभानोर्गृहं व्रजेत्', इत्यारभ्यते। ने (ने इति नेपालकोशस्य संज्ञा) ३ तावत्सदेव?-ने ४ ग्रहरूपाणि–स. ५ °ते तथा–प्रतिमां–क. ६ °णयुतां–क. ७ आकल्पात् पुरुषाः–स. ८ तथा इति नास्ति–ने. ९ °ष्टका–क.

कजजं स्थापयेद्यस्तु कृत्वा शालां मनोरमाम् ।
सर्वाङ्गोपचितां [1]पुण्यां पुण्यं कोटिगुणं भवेत् ॥

**महादेव उवाच ॥**

[2]वस्वचि( स्वस्ववि )त्तानुसारेण यः करोति शिवालयम् ।
तस्याऽहं देहमाश्रित्य तिष्ठामि सततं शुभे ॥
तत्र हेममयं राजा प्रासादं यस्तु कारयेत् ।
तृणाच्छन्नं[3] दरिद्रस्तु समं तद् द्वयमप्युत ॥
दर्भस्तम्बैर्दरिद्रोऽपि भावेन कुरुते गृहम् ।
सोऽपि रुद्रत्वमाप्नोति कुलं चाऽपि समुद्धरेत् ॥
[4]मृद्दारवेष्टकाशैलं यः कुर्यात्तु शिवालयम् ।
त्रिसप्तकुलसंयुक्तः शिवलोके महीयते ॥
मृन्मयात्कोटिगुणितं फलं दार्विष्टकामये ।
ऐष्टकाद् द्विगुणं पुण्यं शैलेये स्याच्छिवालये ॥
अ[ श्मे ]ष्टिकसमायुक्तं योऽपि कुर्याच्छिवालयम् ।
विधूय [5]पापसंघातं स गच्छेच्छङ्करालयम् ॥
क्रीडया( मा )नोऽपि यः कुर्याद्बाल[6]भवे( भावा )च्छिवालयम् ।
रुद्रलोकं स लभते विमानं [7]स( सा )र्वकामिकम् ॥
अप्सरोगणसंकीर्णं सर्वकामसुखप्रदम् ।
तत्रोषित्वा महाभोगी क्रीडमानः सुरासुरैः ॥
पुनरागम्य[8] लोकेऽस्मिन् राजा भवति धार्मिकः ।

---

१ चित्रं पुण्यं को°–क. २ चित्रं चि°–क.; वित्तानुसा°–ने, वि....वत्ता°–स. ३ °णछन्नं–क, स
४ मृद्दार्विष्टकाः शैले-ने. ५ सर्वेराप्मानं-क; मायासंघातं-ने. ६ °भावाच्छिवाल°–क, ने, स. ७ सार्व-
कामिकम्–ने, स. ८ °त्य–क.

## वामन पुराणे—[ ९७, ४६ ]

[1]प्रह्लाद उवाच ॥

यः कारयेद्वै मन्दिरं माधवस्य
पुण्यांल्लोकान्स[2] जयेच्छाश्वतान् वै[3] ।
दत्वारामान् फलपुष्पाभिपन्नान्[4]
[5]भोगान् भुङ्क्ते कामतः स्वर्गसंस्थः ॥
पितामहस्य पुरतः कुलान्यष्टौ[6] तु यानि च ।
तारयेदात्मना सार्द्धं विष्णोर्मन्दिरकारकः ॥

## [7]नृसिंहपुराणे—[ ३२, १२, १४ ]

यः कुर्याच्छोभनं वेश्म नरसिंहस्य भक्तिमान् ।
सर्वपापविनिर्मुक्तो विष्णुलोकमवाप्नुयात् ॥
प्रतिमां लक्षणोपेतां नरसिंहस्य कारयेत् ।
सर्वपापानि संत्यज्य स तु विष्णुपुरे[8] वसेत् ॥
प्रतिष्ठां नरसिंहस्य यः करोति यथाविधि ।
निष्कामो नरशार्दूल देहबन्धात्प्रमुच्यते ॥
[ [9]सकामो नरसिंहस्य पुरं प्राप्य प्रमोदते
मन्वन्तराण्यनेकानि [10]लब्ध्वा साङ्ख्यं विमुच्यते ॥ ]
[11]नरसिंहं प्रतिष्ठाप्य यः पूजामाचरेन्नरः ।
तस्य कामाः प्रसिद्ध्यन्ति [12]पुत्रपौत्रदयो भुवि ॥
[13]विधिवत्स्थापयेद्यस्तु कारयित्वा जनार्दनम् ।
[14]न जातु निर्गमस्तस्य विष्णुलोकात्कदाचन[15] ॥

---

१ 95-46. यः कारयेन्मन्दिरं केशवस्य–मु. पु. अस्याध्यायस्यारम्भ एव [ प्रह्लाद उवाच ] अयं भागः दृश्यते । २ °न्स व्रजेत् शा°–क. ३ वा for वै–मु. पु. ४ पत्रान्–स. ५ भोगान् स भुंक्ते कामतः श्लाघनीयान्–मु. पु. ६ कुलान्यष्टोत्तराणि तु–मु. पु. ७ नरसिंह–क., स. ८ °रं–क. ९ [ ] कोषान्तर्गतभागः मुद्रितपुराणे नोपलब्धः । १० लब्द्धसंख्यानि मुच्यते–क; लब्ध्वा सांख्यं विमुच्यते-स. ११ ३२, १७. १२ परमं पदमाप्नुयात्–मु. पु. १३ ३२, २०. १४ न तु निर्गमनं तस्य विष्णुलोकाद्भवेन्नृप–मु. पु. १५ °थञ्चन–क.

**आदित्यपुराणे**[१]—

लेपनाच्छादनं चैव यः करोति पुनर्नवम् ।
देवस्यायतने कृत्वा न भवेत्कीटजं भयम् ॥

**देवीपुराणे—[ ३४, १-६ ]**

**ईश्वर उवाच ॥**

[२]देव्या गृहं तु यः [३]शक्र [४]कारापयति( रयत्य )शोभनम् ॥
सर्वोपकरणैर्युक्तं [५]शङ्खपगमान्वितम् ।
तस्मिन् [६]घण्टां ध्वजं छत्रं वितानं दर्पणानि च ॥
दत्वा मुरजवंशादि नृत्यं सङ्गीतकानि च ।
देवीशास्त्रार्थवेत्तारं पूजकं [७]तु निवेशयेत् ॥
एवं प्रकुरुते यश्च तस्य पुण्यफलं शृणु ।
दश पूर्वान् परां[८]स्तावदात्मानञ्चैकविंशकम् ॥
उद्धृत्य [९]स्वकुलं[१०] पापाद्ब्रह्मलोके[११] महीयते ।
[१२]गच्छेद्भगवती यत्र परा परमपूजिता ॥
तत्र कल्पान्तरं यावद् भुक्त्वा भोगान्मनोरमान् ।
पुनः कालादिहायातः पृथिव्यामेकराड् भवेत् ॥

**[१३]प्र( प्रा )सादादिकरणविधिः ॥**

**देवीपुराणे ॥**

**ब्रह्मोवाच ॥**

देवी[१४]रुद्रस्तथा विष्णुर्ब्रह्माद्याः सुरसत्तमाः ।
प्रतिष्ठाप्याः शुभे स्थाने अन्यथा ते भयावहाः ॥

---

१ °णे ईश्वर उवाच। देवीगृहं तु यः शक-ने; देवीगृहं तु यः शक्तः कारापयति-स. २ देवीपुराणे, ३४ अध्यायारम्भः, श्लो. १-६ ३ शुक्र कारयत्यतिशोभनम् इति मुद्रितदेवीपुराणपाठः । ४ कारयित्वा सुशोभनम्-क.; कासययति शोभनम्-ने. ५ नानावर्णैस्सुवर्णितम्-मु. पाठः सकपाठकुलान्वितम् इति य-पाटान्तरम्. ६ नवां for घण्टां-ने ७ भवने शुभं. मु. पा. ८ तात आत्मनश्चैकविंशति । मु. पा. ९ च for स्व. मु. पा. १० यायात्-क. ११ °कं. क. १२ गच्छते भवती यत्र । मु. पा. १३ प्रासादादि-ने, स. १४ देवी-क.

गर्भादिलक्षणाधात्री[१] गन्धस्वादेन या भवेत् ।
वर्णेन च सुरश्रेष्ठ सा मही सर्वकामदा ॥

**मत्स्यपुराणे[२] ॥**

अथातः संप्रवक्ष्यामि प्रासादविधिनिर्णयम् ॥
वास्तौ परीक्षिते सम्यक् वास्तुदेहे[३] विचक्षणः[४] ।
वास्तूपशमनं कुर्यात्समिद्भिर्बलिकर्मणा ॥
जीर्णोद्धारे तथोद्याने तथा गृहनिवेशने ।
नवप्रासादभवने [५]प्रासादपरिवर्तने ॥
द्वाराभिवर्तने[६] तद्वत्प्रासादेषु गृहेषु च ।
वास्तूपशमनं कुर्यात्पूर्वमेव विचक्षणः ॥
एकाशीतिपदं [७]लेख्यं वास्तुमध्ये तु[८] पिष्टकैः ।
होमस्त्रिमेखले कार्यः कुण्डे हस्तप्रमाणके ॥
[९]यावैः कृष्णतिलैस्तद्वत्समिद्भिः क्षीरवृक्षकैः ।
पाल(ला)शैः खदिरैर्वापामार्गोदुम्बरसंभवैः[१०] ॥
कुशदूर्वामयैर्वाऽपि मधुसर्पिः समन्वितैः ।
कार्यस्तु पञ्चभिर्बिल्वैर्बिल्वबीजैरथापि वा ॥
होमान्ते भक्ष्यभोज्यैस्तु वास्तुदेशे बलिं हरेत् ।
तद्वद्विशेषनैवेद्यमिदं[११] दद्यात्क्रमेण तु ॥
[१२]ईशकोणे घृतान्नं तु शिखिने विनिवेदयेत् ।
ओदनं [१३]सोत्य(ज्ज्व)लं दद्यात्पर्जन्याय घृतान्वितम् ॥
जयन्ताय ध्वजं पीतं पैष्टं[१४] कूर्मं च संन्यसेत् ।
इन्द्राय पञ्चरत्नानि पैष्टं च कुलिशं तथा ॥

---

१ लक्षिताधात्री–क. २ २६८, २६९, २७०, एते त्रयोऽध्यायाः । ३ °देहवि°–क; वास्तुदेहविचक्षणः इति मु. पाठः. ४ °णैः–क. ५ प्रासादविपरिवर्तने–स. ६ °वर्धने क. ७ लिख्य–मु. पाठः ( page 546 ) स. ८ च पृष्ठतः इति मु. पाठः ९ यवैः–क. मु.–पाठश्च, स १० °रैरन्यैरपा–क.; खादिरैश्चापि मधुसर्पिस्समन्वितैः मु. पा. ११ °मेत्रं–मु. पा. १२ दशकोण–ने. १३ सफलं–मु. पा. १४ कूर्मं छ्यं सन्यसेत्–क.

वितानकं च सूर्याय [1]धूम्रशक्तं[2] तथैव च ।
सत्याय घृतगोधूमान् मत्स्यान् दद्याद्भृशाय च ॥

शष्कुलीश्चान्तरीक्षाय दद्यात्सक्तूंस्तु वायवे ।
लाजाः पूष्णे तु दातव्या वितथे चणकोदनम् ॥

गृहक्षताय मध्वन्नं यमाय पिशितौदनम् ।
गन्धौदनं च गन्धर्वे [3]भृङ्गे मेषस्य भृङ्गिकाम् ॥

मृगाय यावकं[4] दद्यात्पुष्पदन्ताय पायसम्[5] ।
कुशस्तम्बेन सहितं दद्यात्पद्मं च वारुणे ॥

[6]पैष्टं हिरण्मयं दद्यादसुराय सुरा मता ।
घृतौदनं च शोषाय गोधां वै पापयक्ष्मणे ॥

घृतलड्डुकांस्तु रोगाय [7]नागे पुष्पं फलान्वितम् ।
सर्पिर्मुख्याय दातव्यं मुद्गौदनमतःपरम् ॥

भल्लाटस्थानके दद्यात्सोमाय घृतपायसम् ।
[8]नागाय शालुकं पैष्टमदित्यै [9]लोपिकास्तथा ॥

---

१ धूम्रं सक्तु for धूम्रशक्तं मु. पा. २ रक्तं–क. ३ भृङ्गमेषस्य–ने. भृङ्गराजस्य भृङ्गिकाम् । इति–मु. पाठः. ४ शूर्पकं–क. ५ पितृभ्यः कृसरा मता ॥ दैवारिके दन्तकाष्ठं पैष्टं कृष्णबलिं तथा (कृष्णाबलिं स.) सुग्रीवेऽपूपकं दद्यात् पुष्पदन्ताय पायसम् ॥ इति–मु. पाठः स;

पितृभ्यः कृसरो मताः
दौवारिके दत्तकाष्ठं पैष्टं कृष्णबलिं तथा ॥
........................मम ।
कुशस्तं°–क;

पितृभ्यः कृसरा मता । दैवारिके दन्तकाष्ठं पैष्टं कृष्णाबलिं तथा ॥
सुग्रीवे पूगं दद्यात् पष्पदन्ताय पायसम् ॥
कुशस्तं°—'ने.'

६ पिष्टं for पैष्टं मु. पा. ७ नागप्रष्पम्–ने. नागेप्रष्पफलानि च–मु. पाठः ८ नागाय पैष्टं शालूरं अदित्यै लोपिकात्तथा-क; भगाय शालिकं पिष्टं–मु. पा. ९ पोलिका–मु. पाठः ।

दित्यै तु पूरिकां दद्यादित्येवं बाह्यतो बलिः ।
क्षीरं[1] यमाय दातव्यमायवत्साय[2] वै दधि ॥

सवित्रे लड्डुकान्दद्यात्समरीचान्[3] कुशादनम् ।
सवितुर्गुडपुष्पं[4] च जयाय घृतचन्दनम् ॥

विवस्वते पुनर्दद्याद्रक्तचन्दनपायसम् ।
हरितालौदनं दद्याद्बुधाय घृतपायसम्[5] ॥

घृतौदनं तु[6] मित्राय रुद्राय घृतपायसम् ।
आमं पक्वं तथा मांसं देयं स्याद्राजयक्ष्मणे ॥

पृथ्वीधराय मांसानि कूष्माण्डानि च दापयेत् ।
शर्करापायसं दद्यादर्य्म्ले[7]( र्यम्णे ) पुनरेव [8]तु ॥

पञ्चगव्यं [9]यवांश्चैव तिलाक्षतहविश्चरून् ।
भक्ष्यं भोज्यं च विविधं [10]ब्रह्मणे विनिवेदयेत् ॥

एवं संपूजिता देवाः शान्तिं कुर्वन्ति ते सदा ।
सर्वेभ्यः काञ्चनं दद्याद्ब्रह्मणे[11] गां पयस्विनीम् ॥

[12]राक्षसीनां बलिर्देयस्त्वपि यादृक्[13] तथा शृणु ।
[14]मद्यो( द्यौ )दनं घृतं पद्मकेसरं [15]हविषान्वितम् ॥

ईशानभागमाश्रित्य [16]चरक्यै विनिवेदयेत् ।
मांसो( सौ )दनं, [17]सरुधिरं हरिद्रौदनमेव च ॥

---

१ °रं सोमाय दा°–क. २ °पव°–क, स, दातव्या पायक...यवैदधि–ने, °व्यमापवत्साय–मु. पाठः ३ °चं–क, मु. पाठः ४ °पूपांश्च–मु. पाठः ५ °दिन्द्राय घृतपायसं–क, °दिन्द्राय घृतसंव्रतम्–मु. पाठः ६ च–क, मु. पा. ७ °दर्यम्णे–क, मु. पा. ८ हि for तु–मु. पा. ९ °गांवांस्यैव–ने. १० °ब्रा–क. ११ ब्राह्मणे–क, मु. पा. १२ राक्षसानां–क. १३ °यो अपि यादृ°–क, ने, देयः अपि यादृग्यथा शृणु । मु. पा., स. १४ मांसौदनं–क, मु. पा. १५ रुधिरान्वितम्–मु. पा. १६ चरकौ–ने. १७ च for स–मु. पा.

आग्नेयीं दिशमाश्रित्य विदार्यै विनिवेदयेत् ।
दध्योदनं सरुधिरमस्थिखण्डैश्च संयुतम् ॥
पीतरक्तं बलिं दद्यात्पूतनायै तु [१]राक्षसीम् ।
[२]वायव्यै पापराक्षस्यै [३]मत्स्यमांसं सुरारसम्[४] ॥
पायसं [५]वाऽपि दातव्यं [६]स्वनाम्ना सर्वतः क्रमात् ।
नमस्कारान्तयुक्तेन प्रणवाद्येन सर्वतः ॥
ततः सर्वौषधी( धि )स्नानं यजमानस्तु[७] कारयेत् ।
प्रासादभवनोद्यानप्रारम्भे [८]परिवर्त्तने ॥
पुरवेश्मप्रवेशेषु सर्वदोषापनुत्तये ।
[९]इति वास्तूपशनं कृत्वा सूत्रेण वेष्टयेत् ।
रक्षोघ्नपावमानेन सूक्तेन[१०] भवनादिकम् ॥
[११]कृतमङ्गलवाद्येन कृत्वा ब्राह्मणवाचनम् ।
अनेन विधिना यस्तु प्रतिसंवत्सरं बुधः ॥
गृहे वाऽऽयतने [१२]कुर्यान्न स दुःखमवाप्नुयात् ।
न च व्याधिभयं तस्य न च बन्धुधनक्षयः ॥
जीवेद्वर्षशतं [१३]स्वर्गे कल्पमेकं [१४]वसेन्नरः ।
एवं वास्तुबलिं कृत्वा [१५]भजेत्षोडशभागिकम् ॥

---

१ °रक्षसे–क, सरक्षसे for तु राक्षसीम्–मु. पाठः  २ °वायव्यां मु. पा.  ३ मांस्यं मासं सुरासत्रं–क.  ४ °सवम् for रसम् मु. पा.  ५ चापि–क, मु. पा.  ६ स्वनामाना सर्वतः–क, सनाम्ना–ने, स.  ७ °स्य कारयेत् । द्विजांश्च पूजयेद्भक्त्या ये चान्ये गृहमागताः ।
एतद्वास्तूपशमनं कृत्वा कर्म समाचरेत् ॥
प्रासाद°–क, मु. पाठश्च,
यजमानस्तु कारयेत् । द्विजांस्तु पूजयेद्भक्त्या ये चान्ये गृहमागताः ।
एतद्वास्तूपशमनं कृत्वा कर्म समाचरेत् ॥ प्रासाद°–ने, स.
८ विनिवर्तने–मु. पा.  ९ This line is not found in the printed book.
१० °त्रेण–क.  ११ कृतमङ्गलवाद्यं च–स.  १२ °त्स न दुःख°–क.  १३ मध्ये–क.  १४ च तिष्ठति–मु. पाठः  १५ भाजेत्–ने.

तस्य मध्ये [१]चतुर्भागं तस्मिन् [२]गर्तं तु कारयेत् ।
भागं द्वादशकं सार्द्धं ततस्तु परिकल्पयेत् ॥

[ चतुर्दिक्षु तथा ज्ञेयं निर्गमं तु ततो बुधैः । ]
चतुर्भागेन भित्तीनामुच्छ्रयः स्यात्प्रमाणतः ।
द्विगुणः शिखरोच्छ्रायो भित्त्युच्छ्रायप्रमाणतः [३] ॥

शिखरार्द्धस्य चार्द्धेन विधेया तु प्रदक्षिणा ।
[४]चतुर्दिक्षु तथा ज्ञेयो निर्गमस्य[५]( स्तु ) तथा बुधैः ॥

गर्भसूत्रद्वयं चाग्रे [६]विस्तरो मण्डपस्य तु ।
आयतः स्यात्त्रिभिर्भागैर्भद्रयुक्तः सुशोभनः ॥

पञ्चभागेन संभज्य [७]गर्भमानं विचक्षणाः ।
भागमेकं गृहीत्वा तु [८]घा( प्रा )ग्ग्रीवं कल्पयेद् बुधः ॥

गर्भसूत्रसमो[९]भागादग्रतो [१०]मुख्यमण्डपः ।
एतत्सामान्यमुद्दिष्टं प्रासादस्येह लक्षणम् ॥

तथान्यं [११]च प्रवक्ष्यामि प्रासादं लिङ्गमानतः ।
लिङ्गं पूजाप्रमाणेन कर्तव्या पीठिका बुधैः ॥

[१२]पीठिकार्द्धेन भागः स्यात्तन्मानेन तु भित्तयः ।
बाह्यभित्तिप्रमाणेन उत्सेधस्तु भवेत्ततः ॥

[१३]भित्त्युच्छ्रायात्तु द्विगुणः शिखरस्य समुच्छ्रयः ।
शिखरस्य चतुर्भागात् कर्तव्या च प्रदक्षिणा[१४] ॥

---

१ चतुर्भिस्तु भागैर्गर्भं तु कारयेत्–मु. पाठः २ गर्तें तु–क. ३ भित्त्युच्छ्रायाच्च मानतः–स. ४ This line is not found at this place in the printed book. ५ स्तु–क. ६ °स्ता°–क, मु. पाठः ७ गर्तमानं विशेषतः–क. ८ प्राग्ग्रीवं–क, प्राग्ग्रीवं–ने, मु. पा., स. ९ °मं–क. १० मुखमण्ठपं–क, मुख–मु. पाठः. ११ संप्रवक्ष्यामि–क, तु for च is मु. पु. १२ पिण्डकार्धेन भागेन तन्मानेन च भित्तयः–क, पिण्डकार्धेन–मु. पाठः. १३ भित्त्युच्छ्रायात्तद्द्विगुणः–स. १४ °गात्कर्तव्या स्यात्प्रदक्षिणा–क, °गा कर्तव्यास्य प्रदक्षिणा–स.

प्रदक्षिणायास्तु समस्तत्रग्रतो मण्डपो भवेत् ।
तस्य चार्द्धेन कर्तव्यस्त्वग्रतो मुखमण्डपः ॥

प्रासादौ[1] निर्गतौ कार्यौ कपोलौ गर्भमानतः ।
[2]अर्द्धभित्त्युच्छ्रयात्तस्य मञ्जरी[3] तु( रीस्तु ) प्रकल्पयेत् ॥

[4]मण्डपस्यार्द्धभागेन[5] शुकनासां प्रकल्पयेत्[6] ।
[7]ऊर्द्धं तथार्द्धभागेन वेदीबन्धो भवेदिह ॥

वेद्याश्चोपरि [8]तच्छेषं कण्ठश्चामरमारकः ।
एवं विभज्य प्रासादं शोभनं कारयेद् बुधः ॥

[9]तथान्यच्च प्रवक्ष्यामि प्रासादस्येह लक्षणम् ।
[10]गर्भमानप्रमाणेन प्रासादं शृणुत द्विजाः ॥

विभज्य [11]नवधा गर्भं [12]मध्ये लिङ्गस्य पीठिका ।
[13]पादाष्टकं तु रुचिरं पार्श्वतः परिकल्पयेत् ॥

मानेन तेन विस्तारो भित्तीनान्तु [14]विधीयते ।
[15]पादं पञ्चगुणं कृत्वा भित्तीनामुच्छ्रयो भवेत् ॥

स एव [16]शि[ ख ]रस्यापि द्विगुणः स्यात्समुच्छ्रयः ।
चतुर्धा[17] शिखरं भज्य अर्द्धभागद्वयस्य च[18] ॥

शुकनासं प्रकुर्वीत तृतीये वेदिका मता ।
[19]कण्ठमामलसारन्तु चतुर्थे[20] परिकल्पयेत् ॥

---

१ °दाभ्निर्गतौ–मु. पा. २ ऊर्ध्वद्धभित्यु°–क. ३ °रीस्तु–क. ४ मञ्जर्याश्चार्धभागेन–क, मु. पाठः ५ °भागैश्च–ने. ६ शुकनासं प्रकल्पयेत्–स. ७ अर्धं तदार्धभागेन–स. ८ यच्छेषं कण्ठमामलमारकम्–क, यच्छेषं कण्ठश्चामलसारकं–मु. पा. ९ अथान्यच्च–मु. पा. १० गर्भमानेन प्रासादं शृणुत द्विजाः–ने. ११ नव वा गर्भं मध्ये मानस्य पीठिका–क. १२ मध्ये स्याल्लिङ्गपीठिका–मु. पा. १३ पादाष्टकन्तु रुचिरं पार्श्वतः–ने. १४ शिष्यते–क. १५ पादे–ने. १६ शिखरस्यापि–स. १७ °र्धा शिखरस्तस्य–क. १८ तु for च–मु. पा. १९ °मामलसारं तु–क, °मानलसारं तु–स. २० °र्थं–क.

कपोलयोस्तु संहारो द्विगुणोऽस्य विधीयते ।
शोभनैः [1]पत्रवर्णाभैरङ्गकैश्च विभूषितः ॥

प्रासादोयं तृतीयस्तु मया तुभ्यं निवेदितः ।
सामान्यमपरं तद्वत्प्रासादं श्रृणुत द्विजाः ॥

त्रिभेदं कारयेत्क्षेत्रे[2] यत्र तिष्ठन्ति देवताः ।
[3]एवं कृत्वाऽतिमानेन ब्राह्मे भावविनिर्गताम् ॥

नेमीं पादेन विस्तीर्णां प्रासादस्य समन्ततः ।
गर्भन्तु द्विगुणं [4]कृत्वा नेम्या मानं भवेदिह[5] ॥

स एव भित्तेरुत्सेधो द्विगुणः शिखरो मतः ।
[6]प्राग्ग्रीवः पञ्चभागेन [7]विस्तारस्तस्य चोच्यते ॥

कारयेत्सुषिरं[8] तस्य प्राकारस्य त्रिभागतः ।
प्राग्ग्रीवं [9]तस्य मानेन[10] कामे तस्य विशेषतः ॥

कुर्याद्वा पञ्चभागेन प्राग्ग्रीवं कर्णमूलतः ।
स्थापयेत्कनकं [11]तद्वद्गर्त्तान्ते [12]कर्णमूलतः ॥

एवं च त्रिविधं कुर्याज्ज्येष्ठं मध्यं कनीयसम् ।
लिङ्गमानानुभेदेन[13] रूपभेदेन वा पुनः ॥

एते सामान्यतः प्रोक्ता नामतः श्रृणुताऽधुना ।
[14]मेरुमन्दरकैलासा[ : ] [15]कृतसिंहमृता( गा )स्तथा ॥

---

१ परिवर्ताभिः वर्तकैश्च विभूषिता–क, पत्रवल्लीभिः रण्डकैश्च–मु. पा. २ °र्थं–क, मु. पा., स. ३ एवं कृत्वातिमानेन वाह्ये भावत्रिनिर्गताम्–स, रथं कृतेन मानेन बाह्यभागबहिस्तुतं । नेमिः पादेन विस्तीर्णा प्रासा°–क, रथाङ्कहस्तेन मानेन बाह्यभागविनिर्गतः–मु. पा. ४ कुर्यात्–क, मु. पा. ५ °तस्य मानं भवेदिह–मु. पा. ६ प्राग्ग्रीवं पञ्च°–स. ७ निष्कासस्तस्य–मु. पा. ८ °स्वाकरं तद्वत् प्राकारस्य विभागतः–क. ९ पञ्चभागेन निष्काषेण विशेषतः–मु. पा. १० निष्कासेन विशेषणं–क. ११ तत्र गर्भान्ते–मु. पा. १२ हारमूलतः–क, द्वारमूलतः–मु. पा. १३ °थ भेदेन–क. १४ मेरुमन्दरकैलासकुम्भसिंहमृगास्तथा ॥ मु–पाठः १५ कुम्भसिंहमृगास्तथा–क, कृतसिंहमृगास्तथा–ने, कतसिंह ? स.

विमान[1]च्छन्दकस्तद्वच्चतुरस्रस्तथैव च ।
अष्टास्रः षोडशास्रश्च वर्तुलः सर्वभद्रकः ॥

[2]सिंहश्च नन्दनश्चैव नन्दिवर्द्धनकस्तथा[3] ।
[4]हंसो वृषः सुपर्णेयः पद्मकोऽथ समुद्रकः ॥

[5]प्रासादा नामतः प्रोक्ता विभागं शृणुत द्विजाः ।
शतशृङ्गश्चतुर्द्वारो[6] भूमिकाषोडशोच्छ्रितः[7] ॥

नानाविचित्रशिखरो मेरुः[8] प्रासाद उच्यते ।
मन्दरो द्वादशः प्रोक्तः कैलासो नवभूमिकः ॥

विमानच्छन्दकस्तद्वदनेकशिखराननः ।
स चाष्टभूमिकस्तद्वत्सप्तभिर्नन्दिवर्द्धनः ॥

[9]वि( विं )शाण्डकसमायुक्तो नन्दनः [10]स उदाहृतः ।
[11]षोडशास्रसमायुक्तो नानारूपसमन्वितः ॥

अनेकशिखरस्तद्वत्सर्वतोभद्र उच्यते ।
[12]चन्द्रशालासमोपेतो विज्ञेयः [13]पञ्चभूमिकः ॥

वलभीच्छन्दकस्तद्वच्छु[14]कनास( स )त्रयान्वितः[15] ।
[16]वृषस्योच्छ्रायतस्तुल्यो मण्डलश्चास्रवर्जितः ॥

सिंहः [17]सिंहकृतिर्ज्ञेयो गजो गजसमस्तथा ।
कुम्भः कुम्भाकृतिस्तद्वद्भूमिकः[18] कनकोच्छ्रयः ।

---

१ °छन्दसस्तद्वत्–ने, स. २ सिंहेशो नन्दनश्चैव-क, सिंहास्यो नन्दनश्चैव–मु. पा. ३ °वधेन एव च–स. ४ सिंहो वृषः सुवर्णश्च पद्मकोऽथ स समुद्रकः । ५ प्रासादनामतः प्रोक्तान् विभागान् शृणुत द्विजाः–क. ६ °रां–ने. ७ °शाकृतिः–क. ८ °रुप्रासाद–क. ९ विंशाण्ड–क, त्रिषःणक-मु. पा. १० सनुदाहृतः–स. ११ षोडशाण्डकसंयुक्तो–स. १२ चित्रशाला मु. पा. १३ °भौतिकः–क. १४ °दनेकशिखराननः–मु. पा. १५ °नासत्र–क, छकनास अर्थान्वितः–ने. १६ वृषस्योच्छ्रयस्तुल्यो मण्टपश्चास्ति वर्जितः ।–क, वृषश्चोभयतस्तुल्यो–स. १७ सिंहगतिर्ज्ञेयो–स. १८ °भूमिकानवकोच्छ्रितः–क, मु. पाठः ।

अङ्गुलीपुटसंस्थानो[१] पञ्चाण्डकविभूषितः ।
षोडशास्त्रः समन्तात्तु[२] विज्ञेयः स [३]समुद्गकः ॥

पार्श्वयोश्चन्द्रशोभश्च[४] उच्छ्रयो भूमिकाद्वयम् ।
तथैव [५]पद्मकः प्रोक्त उच्छ्रायो भूमिकात्रयम् ॥

षोडशास्त्रः स विज्ञेयो विचित्रशिखरः शुभः ।
मृगराजस्तु विख्यातश्चन्द्रशाल[६] विभूषितः ॥

प्राग्ग्रीवेण विशालेन भूमिका[७] सुखवदुन्नतः ।
अनेकचन्द्रशालस्तु[८] [९]गजः प्रासाद इष्यते ॥

पर्यस्तगृहराजो वै गरुडो नाम नामतः ।
सप्तभूम्युच्छ्रयस्तद्वच्चन्द्रशाला[१०] उपासिता ॥

भूमिकास्तु[११] षडा( ड )शीति बाह्यतः सर्वतो भवेत् ।
[१२]कर्तव्यो गरुडस्तद्वदुच्छ्राया[१३]द्दशभूमिकः ॥

पद्मकः षोडशास्त्रस्तु भूमिद्वयमथाधिकः ।
पद्मतुल्यप्रमाणेन श्रीवृक्षक इति स्मृतः ॥

[१४]पञ्चाण्डको द्विभूमिश्च गर्भे हस्तचतुष्टयम् ।
वृषो भवति नाम्नायं प्रासादः [१५]सार्वकामिकः ॥

सप्तकाः पञ्चकाश्चैव प्रासादास्ते[१६] यथोचिताः ।
[१७]सिंहास्येन समा ज्ञेया ये चान्ये तत्प्रमाणकाः ॥

---

१ °नपञ्चार्भकविभूषितः–क. २ °च्च–क, मु. पा. ३ समुद्रकः–स. ४ °शालेस्य उच्छ्रयो–क, पार्श्वयोश्चन्द्रशालेऽस्य उच्छ्रायो भूमिकाद्वयम् । मु. पा. ५ षाषिकः पो–क. ६ ला–क., लो–मु. पा. ७ °कास्च षडुन्नताः–क, °भूमिकासु षडुन्नतः–मु. पा. ८° व्यगजः क. । ९ गतः–ने. १० °लासमन्वितः क, °लात्रयान्विता–ने, °लात्रयान्वितः–मु. पा. ११ श्च–क, भूमिकाषडशीतिस्तु–मु. पा. १२ यथा-गरुडस्तद्वत्–ने, तथान्यो गरुडस्तद्वत्–मु. पा. १३ यो–क. १४ पञ्चाण्डकस्त्रिभूमिस्तु–स. १५ सर्व-कामिकः–ने, १६ वै मयोदिताः–क, मु. पाठाः १७ सिंहस्य ते समा–स.

चन्द्रशालैः समोपेताः सर्वे प्राग्ग्रीवसंयुताः ।
[१]ऐष्टिका दारवाश्चैव शैला वा स्युः सतोरणाः ॥

मेरुः पञ्चाशहस्तः स्यान्मन्दरः [२]पञ्चहीनकः ।
चत्वारिंशत्तु[३] कैलासश्चतुस्त्रिंशद्वितानकः[४] ॥

नन्दिवर्धनकस्तद्वद् द्वात्रिंशत्समुदाहृतः ।
त्रिंशद्भिर्नन्दनः प्रोक्तः सर्वतोभद्रकस्तथा ॥

वर्तुलः पद्मकश्चैव विंशद्धस्त उदाहृतः ।
गजः सिंहश्च कुम्भश्च वलभीछन्दकस्तथा ॥

एते षोडशहस्तः[५](स्ताः) स्युश्चत्वारो देववल्लभा
कैलासो मृगराजश्च [६]वितानच्छन्दको [७]गजः ॥

एते द्वादशहस्ताः स्युरेतेषां [८]सिंहनन्दनः[९] ।
गरुडोऽ[१०]ष्टकरो ज्ञेयो हंसो दश उदाहृतः ॥

एवमेते[११] प्रमाणेन कर्तव्याः शुभलक्षणाः ।
यक्षराक्षसनागानां मातृहस्तः[१२] प्रशस्यते ॥

तथा मेर्वादयः सप्त ज्येष्ठ[१३]लिङ्गेन[१४] सुखावहाः ।
श्रीवृक्षकादयश्चाष्टौ मध्यमस्त [१५]उदाहृताः ॥

तथा हंसादयः पञ्च [१६]कन्यसे(के) शुभदा मताः ।
वलभीच्छन्दके[१७] गौरी जटामुकुटधारिणी ॥

---

१ °ष्टका–क. २ सप्तही°–क. ३ °स्तु–क. ४ °मानकः–क, मु. पाठः ५ °स्ता स्युः–क, ने, मु. पाठः ६ °मान–क, मु. पाठः. ७ मतः for गजः–मु. पा. ८ मिहमन्मतम् for सिंहनन्दनः मु. पा. ९ °नौ–क. १० °ष्टकरो हंसो दशमहस उदाहृतः–क. ११ °तत्प्रमा°–क. १२ त्रिहस्तात् प्रणश्यते–क. मातृहस्तात्प्रशस्यते–मु. पाठः १३ ज्येष्ठलिङ्गे शुभावहाः–मु. पा. १४ °गे सुखावहाः–ने. १५ प्रकीर्तिताः–मु. पा. १६ कन्यके शुभदायकाः–क. १७ का–क.

वरदाऽभयदा तद्वत्साक्षसूत्रकमण्डलुः ।
गृहे तु रत्नमुकुटा उत्पला[१]गन्ध( ङ्गद )धारिणी ॥
वरदाऽभयदा वाऽपि [२]पूजयेत्तां सभर्तृकाम् ।
[३]तपोवनाभ्यासगतां पूजयेत्तु पुनः पुनः ॥
[४]देव्या( व्यो ) विनायकस्तद्वद्वल्लभीच्छन्दके शुभाः[५] ।
अथातः संप्रवक्ष्यामि मण्डपानां तु लक्षणम् ॥
[६]मण्डपप्रवरान् वक्ष्ये प्रासादस्याऽनुरूपतः ।
त्रिविधा[७] मण्डपाः कार्या ज्येष्ठमध्यकनीयसः[८] ॥
नामतस्तान् प्रवक्ष्यामि शृणुध्वं द्विजसत्तमाः ।
पुष्पकः पुष्यभद्रश्च सुव्रतोऽमृतचन्दनः[९] ॥
कौशिल्यो[१०]( को ) बुद्धिसंकीर्णो गजभद्रो जयावहः ।
श्रीवत्सो विजयश्चैव वास्तुकीर्तिः [११]श्रुतिन्धरः ।
यज्ञभद्रो विशालश्च संश्लिष्टः [१२]शत्रुमर्दनः ॥
भागपञ्चो[१३] नन्दनश्च मानवो मानभद्रकः ।
सुग्रीवो हर्षणश्चैव कर्णिकारः [१४]पदर्द्धिकः ।
सिंहश्च श्यामभद्रश्च [१५]शुभदश्च तथैव च ।
सप्तविंशतिराख्याता लक्षणं शृणुत द्विजाः ॥

---

१ °लाङ्गदधा°–क, °लङ्कुशधारिणी–मु. पा. २ चापि पूजनीया सभर्तृका–मु. पा. ३ तपोवनस्थामितरां तां तु संपूजयेद् बुधः । मु. पाठः ४ देवो विनायकश्चैव–क, देव्यो विनायक°–स. ५ °भः–क, मु. पाठश्च. ६ मण्डपान् प्रवरान्–स. ७ विविधा–मु. पा. ८ °यसः—

गरुडोष्टकरो ज्ञेयः सिंहो दश उदाहृतः ।
एवमेतत्प्रमाणेन कर्तव्या शुभलक्षणाः ॥
नामतस्तान् प्रवक्ष्यामि शृणुत द्विजसत्तमाः ॥ क.

९ °मण्डलः क, °नन्दनः–मु. पा. १० °क––क. ११ स्तुतिर्जयाः–क, स्तुतिञ्जयः–मु. पा. °कीर्णः श्रुतिधरः–स. १२ समदर्शनः–क. १३ चाननन्दश्च–क. १४ शतर्द्धिकः–मु. पा. १५ सुनन्दश्चाभयावहः–क, सुभद्रश्च–मु. पा.

स्तम्भा यत्र चतुःषष्टिः पुष्पकः स उदाहृतः ।
द्वाषष्टिः पुष्पभद्रस्तु[१] षष्टिः सुव्रत उच्यते ॥
अष्टपञ्चाशकः( क )स्तम्भः कथ्यतेऽमृतचन्दनः[२] ।
[३]कौशल्यो( शिकः ) षट्पञ्चाशच्चतुःपञ्चाशता पुनः ॥
नाम्ना तु बुद्धिसंकीर्णो द्विहीनो जयभद्रकः ।
[४]जयावहो द्विपञ्चाशच्छ्रीवत्सस्तु[५] द्विहीनकः ॥
[६]विजयस्तु द्विहीनः स्याद्वास्तु त्रिंशद्धि मानतः ।
द्वाभ्यामेव प्रहीन( ण )श्च[७] ततः श्रुतिधरोऽपरः ॥
[८]चत्वारिंशच्छ्रुतिधरो[९] तद्विहीनो विशालकः।
[१०]षट्त्रिंशकस्तु संश्लिष्टो द्विहीनः शत्रुमर्दनः ॥
द्वात्रिंशद्भागपञ्चस्तु त्रिंशन्नन्दनमानवः[११] ।
अष्टाविंशः[१२]( शो ) मानभद्रः सुग्रीवस्तद्विहीनकः ॥
[१३]द्वात्रिंशद्( द्ध )र्षणो ज्ञेयः कर्णिकारश्च विंशतिः ।
[१४]पदर्द्धिकोऽष्टादशभिर्द्विष्टः( ष्टौ ) सिंह उच्यते ॥

---

१ °श्च त्रिषष्टिस्स च उच्यते–क. २ °मण्डलः–क, °नन्दनः–मु. पा. ३ कौशिकस्सप्तपञ्चाश-° क, कौशल्यः षट् च पञ्चाशच्चतुष्पञ्चाशता पुनः । मु. पाठः. ४ जयावहस्तु पञ्चाशच्छ्रीवत्सस्तद्विहीनकः । मु. पा. ५ °स्तद्विहीनकः–क. ६ विजयस्तु विहीनस्स्यात् वास्तुसंकीर्णकस्ततः । क, विजयस्तद्विही–नस्स्याद्वास्तुकीर्तिस्तथैव च । मु. पा. ७ हीयेत–क, मु. पा. ८ चत्वारिंशद्गजभद्रस्तु द्विहीनस्तु विशालकः । क. ९ घज्ञभद्रः १० षट्त्रिंशच्चैव सुश्लिष्टो–मु. पाठः. ११ त्रिंशद्भिः मानवस्मृतः–क, त्रिंशद्भिर्नन्दनः स्मृतः–मु. पा. १२ °शन्मानभद्रः–स, °शन्मानभद्रः सुग्रीवस्तु विहीनकः–क, °शन्मानभद्रः ने, °शन्मानवस्तु मानभद्रो द्विहीनकः–मु. पा. १३ द्वाविंशद्धर्षणो ज्ञेयः–स, द्वाविंशद्र्षणो ज्ञेयः कर्णिकारश्च विंशकः–क.

चतुर्विंशस्तु सुग्रीवो द्वाविंशो हरितो मतः ।
विंशतिः कर्णिकारः स्यात् अष्टादशशताधिकः ॥
सिंहो भवेद्द्विहीनश्च श्यामभद्रो द्विहीनकः ॥
सुभद्रस्तु तथा प्रोक्तो द्वादशस्तम्भसंयुतः ॥ इति–उपरितनपङ्क्तिचतुष्टयपाठभेदाः मुद्रितकोशे. १४ पदार्द्धको द्वादशभिः द्विरष्टौ सिंह उच्यते–क.

द्विहीनः श्यामभद्रस्तु[1] शुभदश्च निगद्यते ।
श्यामभद्रः क्वचित्प्रोक्तो द्वादशस्तम्भसंयुत ः॥
मण्डपाः कथिताश्चैते[2] यथावल्लक्षणान्विताः ।
[3]त्रिकोणं वृत्तमर्द्धेन्दुमष्टकोणं द्विरष्टकम् ॥
चतुष्कोणं तु[4] कर्तव्यं संस्थानं मण्डल( प )स्य[5] तु ।
[6]राष्ट्रं च विजयश्चैव आयुर्वर्द्धनमेव च ॥
पुत्रलाभः श्रियः पुष्टिस्त्रिकोणादिक्रमाद्भवेत् ।
[7]एवं तु शुभदाः प्रोक्ता अन्यथा तु भयावहाः ॥
चतुःषष्टिपदं कृत्वा [8]मखद्वारं प्रकल्पयेत् ।
विस्तारा[9][ द् ] द्विगुणोच्छ्रायं तत्त्रिभागः कटिर्भवेत् ॥
विस्तारार्द्धो भवेद्गर्भो भित्तयोऽन्याः समन्ततः ।
गर्भपादेन विस्तीर्णं द्वारं त्रिगुणमायतम् ॥
तथा[10] द्विगुणविस्तीर्णमुखस्तद्वदुदुम्बरः ।
विस्तारपादप्रतिमं[11] बाहुल्यं शाखयोः स्मृतम् ॥
त्रिपञ्चसप्तनवभिः शाखाभिर्द्वारमिष्यते ।
कनिष्ठं मध्यमं ज्येष्ठं[12] यथायोगं प्रकल्पयेत् ॥
[13]विस्ताराद् द्विगुणोच्छ्रायं चत्वारिंशद्भिरुन्नतम्[14] ।
धन्यमुत्तममायुष्यं धनधान्यकमेव च ॥

---

१ °श्च–क. २ ह्येते–क, तुभ्यं–मु. पा. ३ त्रिकोणं वृत्तमध्येन्दुमष्टको°–क. ४ च–क. ५ °पस्य तु–क, ने. ६ राज्यं–मु. पा. ७ एवं तु शुभदः प्रोक्तो अन्यथा तु भयावहः । स. ८ मध्ये द्वा°–क, मु. पाठश्च. ९ °रं–क. १० °तो–क. ११ °मं वाहनं चास्रयाश्रितं–क, °माबाहुल्यं–स. १२ °ष्ठमध्यमज्येष्ठं–क.

१३ अङ्गुलानां शतं सार्धं चत्वारिंशत्तथोन्नतम् ।
त्रिंशद्विंशोत्तरं चान्यद्धन्यमुत्तमेव च ॥

शतं चाशीतिसहितं इति मुद्रितपाठः । १४ °द्विरुतमम्–क.

शतं वाशीतिसहितं [1]चान्तर्निर्गमनं भवेत् ।
अधिकं दशभिस्तद्वत्तथा षोडशभिः शतम् ॥
शतमानं तृतीयं तु नवत्याशीतिभिस्तथा ।
दश द्वाराणि चैतानि क्रमेणोक्तानि सर्वदा ॥
अन्यानि वर्जनीयानि मानसोद्वेगदानि[2] तु ।
द्वारवेधं तु तत्त्वेन सर्ववास्तुषु वर्जयेत् ॥
[3]वृक्षकोणभ्रमिद्वारास्तम्भकूपध्वजादिभिः ।
[4]श्वभ्रेण कुल्ययाविद्धं न द्वारं शुभदं भवेत् ॥
क्षयश्च दुर्गतिश्चैव प्रवासः क्षुद्भयं [5]तथा ।
दौर्भाग्यं [6]निधनं रोगो दरिद्र्यं कलहं तथा ॥
विरोधश्चार्थनाशश्च सर्ववेधाद्भवेत्क्रमात् ।
पूर्वेण फलिनो वृक्षाः क्षीरवृक्षास्तु[7] दक्षिणे ॥
पश्चिमेन जलं श्रेष्ठं पद्मोत्पलविभूषितम् ।
[8]उत्तरे सरलैस्तालैः शुभाः स्युः पुष्पवाटिकाः ॥
सर्वतस्तु जलं श्रेष्ठं स्थिरमस्थिरमेव च ।
[9]सर्वतश्चापि कर्तव्यं [10]परिखावलयादिकम् ॥
याम्ये तपोवनस्थानमुत्तरे मातृकागृहम् ।
महानसं तथाग्नेये नैर्ऋते च विनायकाः ॥
वारुणे श्रीनिवासश्च वायव्ये गृहमालिका ।
उत्तरे यज्ञशालास्तु[11] निर्माल्यस्थानमुत्तरे ॥

---

१ वातनिर्गमनं भवेत्–मु. पा. २ °सो यत्पदानि च–क. ३ वृक्षकोणभ्रमाद्वारा स्तम्भ-कूपध्वजादरे–प. ४ कुड्यश्वभ्रेण वा विद्धं द्वारं न शुभदं भवेत्–मु. पाठः ५ यथा–स. ६ वर्तनं–क, बन्धनं–मु. पा. ७ श्च–क. ८ उत्तरे शरशैलाभै–प. ९ पार्श्वतश्चापि–मु. पाठः १० परिवारादिकालयम् । मु. पा. ११ ला तु–क, ने, स.

[1]वारुणे सोमदैवत्ये बलिनिर्वाहणं[2] स्मृतम् ।
पुरतो वृक्षभस्थानमेष( शेषे ) स्या[ त् ] कुसुमायुधम्[3] ॥
[4]जले वा पीतवसनं विष्णुं तज्जलशायिनम् ।
एवमायतनं [5]कुर्यादुच्चमण्डल[6]संयुतम् ॥

घण्टावितानकसुतोरणचित्रयुक्तं
नित्योत्सवप्रमुदितेन [7]जनेन सार्धम् ॥

यः कारयेत्सुरगृहं [8]विधिवद् ध्वजाङ्कं
श्रीस्तं न मुञ्चति सदा दिवि पूज्यते च ॥

एवं गृहार्चनविधावपि शक्तितः स्यात्
संस्थापनं सकलवेदसुमन्त्रयुक्तम्[9] ॥

गोवस्त्रकाञ्चनहिरण्यधराप्रदानं
देयं गुरुद्विजवरेषु तथान्नदानम् ॥

## [10]अथ दिगुदकवेधादिचिह्नम् ॥

**देवीपुराणे ॥**

**ब्रह्मोवाच ॥**

पुरस्य याम्यभागे तु न स्यात् सूर्यो न केशवः ।
नैर्ऋत्ये[11] वा विशेषेण [12]यजमानोऽत्र दक्षिणे[13] ॥
तत्र देवा न कर्तव्याः सूर्यशंकरकेशवाः ।
यजमानो व्रते( जे )न्नाशं समान्ते बन्धुसंयुतः ॥

---

१ वरुणः सोमदेवत्ये–स. २ °निर्वपणं–मु. पाठः ३ शेषे स्यात्तु सुमायुधम्–ने, शेषे स्यात् धुसुमायुधः–मु. पा, शेषः स्यात्कुसुमायुधम्–स. ४ जलवापी तथैशाने विष्णुस्तु जलशाय्यपि–मु. पा. ५ कुण्डमण्डपसंयुतम्–मु. पा. ६ °मण्डप°–ने. ७ जलेन–ने. ८ विविधध्वजाङ्कं–मु. पा. ९ °लमंत्र-विधानमुक्तं–क, सकलमन्त्रविधानयुक्तम्–मु. पा. १० अथ दिक्भेदस्लकवेधादिभिन्ना तत्र देवीपुराणे–क. ११ ते च विशे–क. १२ यजमानो विनश्यति–क. १३ °णे–रूपो वावारचमो यत्र दक्षिणे वाम्बरेश्वर । तत्र देवा–क.

तन्मध्ये नायकः[1]( कं ) कुर्याद्यत्र देवः स्वयं भवेत् ।
न सूर्यकेशवौ मध्ये यत्र लिङ्गद्वयं द्विजाः ॥

एवं कृते भवेद् व्याधिः [2]कर्तृराष्ट्रे नृपाय च ।
[3]पुरमुद्वसते शीघ्रं षण्मासान्म्रियते कृती ॥

विधानं शुभदं शक्र कथयामि शिवोदितम् ।
नायकं सन्मुखे[4]( खं ) कुर्यान्नृत्यमानं च ताण्डवे ॥

चतुर्भुजं चैकदंष्ट्रं त्र्यक्षं परशुधारिणम् ।
अक्षसूत्रधरं शक्र नामहस्ताभयप्रदम् ॥

विद्यामन्त्रैः प्रतिष्ठा तु कर्तव्या नायकस्य तु[5] ।
अथवा नैर्ऋतेः सूर्यः स्थापितः पश्चिमेन वै ॥

यजमाने भवेद् दुःखमर्थहानिर्भवेद् ध्रुवम्[6] ।
मातरः पूर्वतः कुर्यान्नृत्यमानोत्तरा [7]मताः ॥

वलभीच्छन्दकः( के )शक्र मातृमन्त्रैः प्रतिष्ठिताः ।
अज्ञानात्स्थापितः कैश्चिल्लिङ्गं राक्षसवायवे ॥

दिग्भागे वै शक्र तत्र यत्र लक्ष्मी[ः] सुखावहा ।
कर्तव्या [8]तेन विधिना सर्वाशुभविनाशिनी[9] ॥

देवीमध्ये यथा कैश्चिन्नायकः स्थापितो भवेत् ।
तदा कार्या उमा देवी तस्य पीठे सुरेश्वर ॥

तस्य वामगतः कार्यो नायको विघ्ननायकः ।
एवं कृते भवेच्छान्तिः कर्तुश्च स्थापकस्य च ॥
अन्यथा जायते दोषः पूर्वोक्तो [10]यः परोदितः ।

**तथा ॥**

[11] सूर्यो वह्निर्याम्ये वा नैर्ऋते वा हरिः क्वचित् ॥

---

१ °कं–क, तं मध्ये नायकः–स. २ पुरराष्ट्रनृपस्य च–क. ३ परमुद्वसने–स. ४ °खं कु°–क. ५ च–क. ६ °मथ हानिश्च जायते–क. ७ °नना:–क, मानात्तराः–स. ८ °नेन–क, ने. ९ °निवारिणी–क. १० यस्तु वेदितः–क. ११ तसूर्यादर्धं याम्ये वा.

न विष्णोः पश्चिमे सोमो वायव्ये कारयेच्छिवम् ।
कृते विनश्यते कर्ता तत्स्थानं चोद्वसं भवेत् ॥
देवो न पूज्यते तत्र तस्मिन् स्थाने स्वके शुभे ।
[1]विस्तरेण प्रवक्ष्यामि येन शान्तिः शुभं भवेत् ॥
नगराणां पुराणां च देवतानां पुरादिषु ।
विमार्गेषु शिवः शस्तः सन्मुखः सौख्यभागशः ॥
[2]सर्वतः सौम्य दुर्गातिपुरं नन्दति [3]रक्षिभिः ।
तस्माद् दुर्गा प्रकर्तव्या नगरेषु पुरादिषु ॥
महालक्ष्म्यादिकाः शक्र क्षेमकारी सचण्डिका ।
मङ्गला मङ्गलारूपमहीस्वघ्नि[ हिषघ्नी ] शुभानना[4] ॥
यथास्थानविभागस्थाः सर्वलोकसुखावहाः ।

तथा ॥

यत्र तत्र स्थितं लिङ्गमुच्छ्रितं शुभदं भवेत्[5] ।
वर्णाश्रमनृपादीनां तस्मात्कार्यं समुच्छ्रितम् ॥
[6]न निन्दां कारयेत् शक्र देवो कः शिवसन्निधौ ।
कृते विनश्यते राजा राष्ट्रभङ्गश्च जायते ॥

तथा ॥

प्रासादमात्रा जगती[7] कार्या शक्र न चान्यथा ।
[8]कन्य( नीय )सानां मध्यमा( ध्या )नां सर्वत्रैव विशेषतः ॥
उत्तमानां तु लिङ्गानां [9]तत्रस्थानां सुरेश्वर ।
प्रासादात्[10] द्विगुणा कार्या जगती त्रिगुणा तथा ।
उमेशविष्णुविघ्नेशा एषां या जगती भवेत् ॥

---

१ विसूत्रेय प्रवक्ष्यामि–क. २ सर्वतः सौम्य दुर्गानि पुरं–स. ३ रक्षते–क. ४ महिषघ्नि शिवानना–क, महिषघ्नि शुभानना–स. ५ °गं सर्वप्रीतिकामबदं भवे[–क. ६ न लिङ्गाकारयेदेव–देवो कः क. ७ तां–क. ८ कपेसन्नामध्यमानां अचीमु च विशेषतः–क. ९ वनेजानां–क. १० °दद्विगु°–क.

[1]न तस्य लक्षणं सम्यक् किन्तु वेधे परित्यजेत् ।

**तथा ॥**

सर्वमङ्गला[2](ल)जगत्यवि(धि)कार(रे) ।
पूर्वामुखे तु प्रासादे [3]गर्भा ईशान नर(गाः) शुभाः ॥
आग्नेयस्था उमा शक्र नैर्ऋत्यां विजया शुभा ।
श्रीश्च वायव्यभागे तु मध्ये वै सर्वमङ्गला ॥
एतत्ते कथितं शक्र पञ्चायतनलक्षणम् ।
प्रत्यङ्मुखे च प्रासादे ये देवा जगतीस्थिताः ॥
समासेन प्रवक्ष्यामि वायव्यं[4] तु सरस्वती ।
देवारामतडागादिपुरोद्यानगृहाणि च[5] ॥
[6]तथा द्वादशगे जीवे अष्टमे वाऽथ भास्करे ।
प्रतिष्ठा कारिता विष्णोर्महाभयकरी मता ॥
चतुर्थो रविजो यद्वद्भूमिपः सुरपूजित[7] ।
गर्त्ते पुरशिलान्यासे वर्जनीया[:] सुखार्थिभिः ॥
[8]देवीदेवी सुराध्यक्ष [9]भ(ज)गत्यां सर्वमङ्गला ।
नवान्याः पठिताः शक्र देवमुख्याः पुरोदिताः[10] ॥

---

१ न तस्य लक्षणं सम्यक् किं तु वेधं–क. २ °लजगत्यधिकारे–क, सर्वगङ्गला जगत्पविका–स. ३ गणता नाशगश्शुभः–क, नरश्शुभः–ने, स. ४ °व्यां तु सरस्वती–

ऐशान्यां तु शिवा देवी आग्नेयामम्बिका भवेत् ।
प्रत्यङ्मुखे च प्रासादे नैऋत्यां च रानाशी ? एता देव्यश्शुभा मताः ॥
न चान्या देवता कार्या कृता भयकरी मता
तथा जीवस्थिते सिंहे तथैव मकरस्थिते ।

देवराम°–क. ५ गृहाणि च । विवाहादि महाभाग पदानि विनिर्दिशेत् । तथा द्वादशगे–स. ६ विवाहादि-महाभाग भयदानि विनिर्दिशेत् । तथा द्वादश°–क. ७ त एवं देवी–क. ८ एवं देवी–क. ९ जगत्यां–क. १० पुरोहिताः–स.

[1]मर( हा )राजगृहाद्राजा हट्टभट्टारक भवे कृते ॥
तद्वत्तोयं गृहाद्देव्या[2] द्वारभेदं न कारयेत् ॥
प्रासादवेधं च तथा वर्जयेच्च प्रयत्नतः ॥
वृष्टिवेधे नेत्ररोगो नृपपीडा च जायते ॥
प्रासादवेधेन तथा पूजावंशः पुरक्षमः ॥
जगत्या कोणवेधेन महादुःखं प्रजायते ॥
शिवस्य तु विशेषेण तस्मा[3]द्वेधं परित्यजेत् ॥

**तथा ॥**

[4]प्रासादवेधे कार्या तु मङ्गला सर्वमङ्गला ॥
भूमिवेधे तथा कार्यौ गणेशत्र्यम्बकौ शुभौ ॥
द्वारवेधं[5] तथा कुर्यान्मण्डपं भित्तिमन्दिरम् ॥
कोणवेधे तथा लक्ष्मीं कुर्याद्वा मातृ[6]मण्डलम् ॥
अन्यथा न शुभं शक्र यजमाने[7] पुरस्य च ॥

**तथा ॥**

[8]मातृदक्षिणा( ण )दिक्संस्थभावात्पश्चिमेन वा ॥
भेदवर्जं द्विशालं वा [9]शुकशालमथापि वा ॥
सप्तपञ्चत्रिभौमं वा नैकभौमं [10]मठं भवेत् ॥
[11]आवासद्मः समाख्यातो वासार्थं गृह[12]सन्धिना ॥

---

१ यथा राजगृहादक्षो ह्यहं भयकरं भवेत्–क. २ °व्या आग्नेय्यां मृत्युदा भवेत्–तथा सिद्धाजनेलिङ्गे सुरार्चासु च विशेषतः.

न भेदं कारयेत् शक्र............ ।

मृत्तोयग्रहादिष्टया द्वारभेदं न कारयेत् ॥ क.

°व्या आग्नेय्यां मृत्युदं स्मृतम् । तथा सिद्धायतनलिङ्गेषु प्रत्यर्च्ये च विशेषतः ।

न भेदं कारयेच्छक्रकृतो भयकरे( रो ) भवेत् ।

तद्वत्तोयं गृहाद्देव्या द्वारभेदं न कारयेत् ॥ ने, स ( भयकरं for भयकरे )

३ °स्माद्वेवं–क. ४ प्रासादवेधेन तथा पूजावंशः पुरक्षयः । जुकार्यानुमङ्गला सर्वमङ्गला ॥ भूमिवेधेन–ने. ५ °धस्तथाकार्या–क. ६ °तृ मण्डनम्–क. ७ °नेश्वरस्य च–क. ८ मतं दक्षिणदिक्संस्थमथवा पश्चिमेन वा–क. ९ °एकशाल–क. १० नवं–क. ११ अवास समाख्याता–स. १२ °मेधिनां–क.

[१]मठं विष्णुशिवब्रह्म किञ्चिद्देशगतं शुभम् ॥
नाभिविद्धं न कुर्वीत [२]मर्मविद्धं न शान्तिदम् ॥
[३]नाकाशगं प्रकुर्वीत [४]मठं देवात्कदाचन ॥
महाभयकरं [५]तद्धी[६]परराष्ट्रजनस्य च ॥
[७]नोत्तरे कारयेच्छक्र [८]मठं देवं शिवात्क्वचित् ॥
शिवस्य मात्रधा[९] वा कार्या सर्वसुखावहा ॥
सप्तपञ्च[१०]त्रिभौमं वा मठं शस्तं सदाकृतम् ॥
एकभूमा तु मठिका यतीनां सा सुखावहा ॥
शिवा दक्षिणगा विप्राः शस्ता विष्णोस्तथोत्तरे ॥
[११]नृपकोपि तु शिववन्मध्ये[१२]चानृपदेवयोः ॥
[१३]विप्रा मीतिप्रदास्तत्र राज्यायुः सुखदाः[१४] सदा ॥
याम्यादिपूर्वमाचार्या सौम्यगा देशगाः शुभाः ॥
मठं च [१५]सार्वभौमस्य पद्मशस्तं सदा भवेत् ॥
स्वस्तिकं वर्द्धमानं च [१६]चतुर्वक्रं तथा शुभम् ॥
[१७]नन्द्यावर्तश्च [१८]सर्वाख्यं हंसादीनां सुखावहम् ॥
गुरुशनिकुजबुधशुक्रा[१९]हंसशशिराहुभद्राः ॥
माल जनयन्ति स्वोच्चगृहत्रिकोणसंस्था [२०]यथाक्रमशः ॥
[२१]यातिरिक्तं च रूपं च दिशं कारं सुरालयम् ॥

१ मतं ब्रह्माणब्राह्मणं किंचिच्छेषगतं शुभं–क. २ कर्मवि°–क. ३ °नगं प्र°–क., °शकं प्र°–ने. ४ मतं कोनात्कदाचन–क. ५ °तद्धि–स. ६ °नृपरा°–क. ७ नोत्तानं का°–क. ८ मतं गेहागवात् क्वचित्–क. ९ °धा यथाकार्यं सर्वं सुखावहम्–क. १० 'त्रिभूमस्य मतं शस्तं–क. ११ नृपौकाच्छरवच्छस्तामध्ये वा नृपदेवयोः–क. १२° वा–स. १३ °विप्राश्शन्तिपदास्तत्र–क. १४ °दास्तथा–क. १५ सर्वभूमं स्यात् पद्मगर्भं सदाभवेत्–क. १६ रुद्रकं च तथाशुभं–क. १७ सनन्द्यावर्तं सर्वाद्यं पुंसादीनं सुखा°–क. १८ स शर्वाख्यं–स. १९ °सागजकेतु त्रामनित्यजे नयन्ति सोच्च–क. २० यथाश्रुमनः–क. २१ जातिसक्षं च रूपं च दिशं कालं सु°–क.

सिद्धान्तं राम[1]भद्रं च धाकार्यं मठं शुभम् ॥
अन्यथा कलहोद्वेग[2]मुच्चठं मेरकं तथा ॥
विपरीता मठाशक्र[3] कुर्युर्भूपजनादिषु ॥

**'मठानुवर्त्तौ' तथा—**

आनन्दं शोभनं भद्रं कल्याणं च चतुर्थकम् ॥
पूर्वादिक्रमयोगेन विष्णोः[4]कार्या नरोऽन्यथा ॥
संकीर्णे[5] तु भवेद्यत्र भूमिः शक्र न लभ्यते ॥
तत्र ज्ञात्वा प्रकर्तव्यमेषां मध्ये[6]यथाशुभम् ॥
पूर्वामुखे तु प्रासादे मन्दयाम्ये शुभप्रदम् ॥
पश्चिमास्ये तु प्रासादे पूर्वस्यां पश्चिमे शुभम् ॥
गजं[7] तथोत्तरे कार्यं यदीच्छेद्दीर्घजीवितम् ॥
एकभूमं द्विभूमिं वा कर्तव्यं [8]च न दोषभाक् ॥
[9]विष्णुदेवीषु कर्तव्यं नैक[10]भूमिमठं क्वचित् ॥

## अथ [11]प्रतिमादिलक्षणम् ॥

**मत्स्यपुराणे [ २५८, १ तः ]**

**ऋषय ऊचुः ॥**

क्रियायोगः[12] कथं सिध्येद् गृहस्थादिषु सर्वदा ।
ज्ञानयोगसहस्राद्धि [13]कर्मयोगो विशिष्यते ॥

---

१ °भेदं च दुर्गा कार्या मतं शुभं–क. २ °उच्चाटकरकं तथा–क. °मुच्चटं मेटकं तथा–ने. ३ °क्रं क...मनादिषु–क., मठाः शक्र–स. ४ कुर्यान्नरो°–स. ५ °र्णा तु–क. ६ तथा भवेत्–क. ७ °जं तु चोत्तरं कार्यं–क. ८ न च दो°–क. ९ विद्यादेवी–क. १० भौमं मतं क्वचित्–क., नैकभूमिं मठे क्वचित्–ने., भूमिं मठं–स. ११ °मालक्ष°–क. १२ °गे कथं सिद्धिः–क. १३ °गे वि°–क.

**सूत उवाच ॥**

क्रियायोगं[1] प्रवक्ष्यामि देवतार्चानुकीर्तनम् ॥
भुक्तिमुक्तिप्रदं यस्मान्नान्यल्लोकेषु विद्यते ॥
प्रतिष्ठायां सुराणां च देवतार्चानुकीर्तनात् ॥
देवयज्ञोत्स[2]वं चापि [3]स्थापनार्चनमुच्यते ॥
विष्णोस्तावत्प्रवक्ष्यामि यादृग्रूपं प्रशस्यते ॥
शङ्खचक्रकरं शार्ङ्गं [4]पद्महस्तं गदाधरम् ॥
[5]चक्राकारं शिरस्तस्य कम्बुग्रीवं शुभेक्षणम् ॥
तुङ्गनासं शुक्तिकर्णं प्रशान्तोरुभुजक्रमम् ॥
क्वचिदष्टभुजं विद्याच्चतुर्भुजम[6]थापि वा ॥
द्विभुजश्चापि कर्तव्यो भवने [7]ससुरोवयः ॥
[8]देवस्याष्टभुजस्याऽस्य यथास्थानं निबोधत ।
[9]खड्गगदाचक्रपद्मं देयं दक्षिणतो हरेः ॥
धनुश्च खेटकं चैव शङ्खं चक्रं च वामतः ॥
चतुर्भुजस्य वक्ष्यामि[10] यथैवायुध संस्थितिम् ॥
दक्षिणेन [11]गदां पद्मं वासुदेवस्य कारयेत् ॥

---

१ °गे प्र°–क. २ °त्सवार्चापि वन्दनेन विमुच्यते–क., °त्सवं वापि–स. ३ बन्धनाद्येन मुच्यते इति–मु. म. पु. पृ. ५२८ ४ शङ्खचक्रवरं शान्तम् इति–मु. म. पु. ५ छत्राकारं इति–मु. पु. पृ. ५२८ ६ °मथापरं–मु. पाठ. ७ ससुरोवमा–ने, भवनेषु पुरोधसा इति–मु. पु., सपुरोधसा–क. ८ स omits it. ९ खड्गो गदा शरः पद्मं इति–मु.पाठः। शंखं गदां पद्मं इति–क. १० °मि मानोन्मानं विशेषतः–क. ११ गदा for गदां in printed Matsyapurāṇa.

वामतः शङ्खचक्रे च कर्तव्ये भूतिमिच्छता ॥

कृष्णावतारे तु गदा वामहस्ते प्रशस्यते ॥

यथेच्छया शङ्ख[1]चक्रे चोपरिष्टा[2]त्प्रकल्पते ॥

अधस्तात्पृथिवीदेवी [3]कर्तव्या पादमध्यतः ॥

दक्षिणे प्रणतं तद्वद्गरुत्मन्तं निवेशयेत् ॥

वामतस्तु भवेल्लक्ष्मीः पद्महस्ता [4]सुशोभना ॥

गरुत्मानग्रतो वाऽपि संस्थाप्यो भूतिमिच्छता ॥

श्रीश्च पुष्टिश्च [5]कर्तव्ये पार्श्वयोः [6]पद्मसंयुते ॥

तोरणं चोपरिष्टात्तु विद्याधरसमन्वितम् ॥

देवदुन्दुभिसंयुक्तं गन्धर्वमिथुनान्वितम् ॥

पद्मपत्रसमोपेतं सिंहव्यालसमन्वितम् ॥

[ पत्रवल्ली समोपेतं सिंहव्याघ्रसमन्वितम् । ][7]

तथा कल्पलतोपेतं स्तुवद्भिरमरेश्वरैः ॥

एवंविधो भवेद्विष्णुस्त्रिभागेनास्य पीठिका ॥

नवतालप्रमाणाः स्युर्देवदानवकिन्नराः ॥

अतः परं प्रवक्ष्यामि मानोन्मानं विशेषतः ॥

जालान्तरप्रविष्टानां भानूनां [8]यद्रजः स्फुटम् ॥

त्रसरेणुः स विज्ञेयो वालाग्रं तैरथाष्टभिः ॥

तदष्टकेन लिख्या तु [9]यूका [10]लिख्याष्टकं तथा ॥

---

१ चक्रं तूपरिष्टात् प्रकल्पयेत्–स. २ °त्प्रकल्पयेत्–ने. ३ तस्य–मु. म. पु. ४ शुभानना–मु. म. पु. ५ कर्तव्या–स. ६ °संयुता–स. ७ [ ] Supplied by printed म. पु. ८ °जङ्कुटम्–क., °द्रजः स्फुटम्–मु. पाठः, स. ९ लिकालिख्याष्टकं मता–क. १० लिख्याष्टकैर्मता । (मु. म. पु. ५२८)

यवो यूकाष्टकं तद्वच्चैरष्टभिरथाङ्गुलम् ॥
स्वकीयाङ्गुलमानेन मुखं स्याद्द्वादशाङ्गुलम् ॥
मुखमानेन [1]कर्तव्यं[2] सर्वावयवकल्पनम्[3] ॥
सौवर्णी राजती वाऽपि ताम्री रत्नमयी तथा ॥
[4]शैली दारुमयी वाऽपि [5]लोहसीसमयी तथा ॥
रीतिका धातुयुक्ता वा ताम्रकांस्यमयी तथा ॥
शुभदारुमयी वाऽपि [6]देवतार्चा प्रशस्यते ॥
अङ्गुष्ठपर्वादारभ्य वितस्ति यावदेव तु ॥
गृहेषु प्रतिमा कार्या नाधिका शस्यते बुधैः ॥
आषोडशात्तु प्रासादे कर्तव्या नाधिका ततः ॥
मध्योत्तमकनिष्ठा[7] तु कार्या वित्तानुसारतः ॥
द्वारोच्छ्रायस्य [8]यन्मानं सप्तधा तत्तु कारयेत्[9] ॥
भागमेकं ततस्त्यक्त्वा परिशिष्टं तु यद्भवेत् ॥
भागद्वयेन प्रतिमा त्रिभागीकृत्य तत्पुनः ॥
पिण्डिका[10]भागतः प्रोक्ता नातिनीचा न चोच्छ्रिता ॥
प्रतिमामुखमानेन[11] सर्वभागान्प्रकल्पयेत् ॥
चतुरङ्गुला भवेद्ग्रीवा भागेन हृदयं पुनः ॥
नाभिस्तस्मादधः कार्या भागेनैकेन शोभना ॥

---

१ कर्तव्यो-स. २ °व्यं सर्वावयवलक्षणा-क. ३ °ना.-ने, मु. पाठः, स. ४ शैलदारुमयी वापि-क., शिलादारु-ने, स. ५ देवतार्चा प्रशस्यते। अङ्गुष्ठ°-ने. ६ °ता तु प्र°-क. ७ °ष्ठाच्च-क. ८ यन्मानमष्टधा तत्तु कारयेत्-मु. म. पु. पाठः. ९ °येत्। भागद्वयेन-क. १० पीठिका भागतः कार्या-इति मु. म. पु. ११ समं भाग्यासक°-क, नवभागान्प्रकल्पयेत्-मु. म. पु. पाठः.

निम्नत्वे विस्तरत्वे च अङ्गुलं परिकीर्तितम् ॥
नाभेरधस्तान्मेढ्रं[1] च भागेनैकेन कल्पयेत् ॥
[2]त्रिभागमायतावूरु जानुनी चतुरङ्गुले ॥
जङ्घे [3]त्रिभागविख्याते पादौ च चतुरङ्गुलौ ॥
चतुर्दशाङ्गुलस्तद्वन्मौलिरस्य प्रकीर्तितः ॥
उर्ध्वं मानमिदं प्रोक्तं पृथुत्वं च निबोधत ॥
सर्वावयव[4]भागेषु विस्तरं[5] शृणुत द्विजाः ॥
चतुरङ्गुलं ललाटं स्यादूर्ध्वं नासा तथैव च ॥
द्व्यङ्गुलं तु हनुर्ज्ञेय[6]मोष्ठश्चाङ्गुलसंमितः[7] ॥
अष्टाङ्गुलं ललाटं[8] च तावन्मात्रे भ्रुवौ मते ॥
अर्द्धाङ्गुला भ्रुवोर्लेखा मध्ये धनुरिवा[9]ऽऽनता ॥
उन्नताग्राद्भवेत्सा च[10] श्लक्ष्णा तीक्ष्णा प्रशस्यते ॥
अक्षिणीद्व्यङ्गुलायामे तदर्धं चैव विस्तरे ॥
उन्नतोदरमध्ये तु रक्तान्ते शुभलक्षणे[11] ॥
तारका[12] च त्रिभागेन दृष्टिः स्यात्पञ्चभागिकी ॥
[13]द्व्यङ्गुलं तु भ्रुवोर्मध्यं नासामूलमथाङ्गुलम् ॥
[14]नासाग्रविस्तरं तद्वत्पु[15]टमङ्गुलमानतः ॥
नासापुटबिलं तद्वदर्धाङ्गुलमुदाहृतम् ॥

---

१ °न्मेढ्रं च चतुरङ्गुलौ । चतुर्दशाङ्गुलस्तद्वत्–ने. २ द्विभागेनायतावूरू इति–मु. म. पु. ५२९ ३ द्विभागे वि°–क., द्विभागे–मु. म. पु. पाठः. ४ °मानेषु–क, मु. म. पु. ५ °विस्तरे–ने, विस्तार इति–मु. म. पु. ६ ओष्ठौ द्व्यङ्गुलसम्मितौ, ओष्ठः स्वाङ्गुलसम्मितः इति च पाठभेदौ–मुद्रितकोशेऽपि दृश्यते. ७ °संस्थितौ इति–मु. म. पु. ८ °टे तु–क. ९ °वोन्नता–क. १० °त्पार्श्वे–क, मु. म. पु. ११ °णा–क. १२ °तारकार्ध–मु. म. पु. पाठः. १३ द्विरङ्गुलं भ्रुवोर्मध्ये–क. १४ नासाग्रं विस्तरं तद्वत् घटद्वयमथांगुलं–क. १५ °त्पुटद्वयमथाऽऽनतम्–मु. पा, °त्पुटमंगु°–ने, स.

कपोले द्व्यङ्गुले [1]तद्वत्कर्णमूलाद्विनिर्गते ॥

हन्वग्रमङ्गुलं तद्वद्विस्तारो द्व्यङ्गुलो भवेत् ॥

अर्धाङ्गुला भ्रुवो राजी मृणालसदृशी [2]समा ॥

अर्धाङ्गुलसमस्तद्व[3]दुत्तरोष्ठस्तु विस्तरे ॥

[4]विस्तारसदृशं तद्वन्नासापुटदलं भवेत् ॥

सृक्कणी [5]तीक्ष्णतुल्ये तु कर्णमूलात् षडङ्गुलम् ॥

कर्णौ तु भ्रूसमौ ज्ञेयौ ऊर्ध्वे तु चतुरङ्गुलम् ॥

द्व्यङ्गुलौ कर्णपार्श्वौ[6] तु मात्रामेकां[7] तु विस्तृतौ ॥

कर्णयोरुपरिष्टाच्च मस्तकं द्वादशाङ्गुलम् ॥

[8]ललाटं पृष्ठतोऽर्धेन प्रोक्तमष्टादशाङ्गुलम् ॥

षट्त्रिंशदङ्गुल[9]श्चापि [10]परिणाहः शिरो गतः ॥

सकेशनि[11]चयस्यास्य द्विचत्वारिंशदङ्गुलः ॥

[12]केशास्तद्वज्ज्ञेयास्तद्वदङ्गुलानि तु षोडश ॥

ग्रीवामध्येपरीणाहश्चतुर्विंशतिकाङ्गुलः ॥

अष्टाङ्गुलाभवेद्ग्रीवा पृथुत्वेन [13]विशेषते ॥

स्तनग्रीवान्तरं प्रोक्तमेकतालं स्वयंभुवा ॥

स्तनयोरन्तरं तद्वद्द्वादशाङ्गुलमिष्यते ॥

स्तनयोर्मण्डलं तद्वद्द्व्यङ्गुलं परिकीर्तितम् ॥

---

१ तद्वत् विस्तारो द्व्यङ्गुलो भवेत–क. २ मता–क. ३ °च्चतुरोच्चस्तु विस्तरे–क. ४ निष्पावसदृशं तद्वत्–मु. पाठः ५ ज्योति तुल्येन–क., ज्योतिस्तुल्ये तु–मु. पाठः. ६ °र्श्वे च–क. ७ °का तु–क. ८ ललाटं च पृष्ठार्धेन प्रोक्तमष्टादशङ्गुलं–क. ९ °लो वापि परि°–क., लश्चास्य–मु. पा. १० परीणाहः–स. ११ निचयो यस्य–मु. पा. १२ केशान्ता दत्तकात्तद्वत् तद्वदं–क; केशान्ताद्धनुका–मु. म. पु. पाठः. १३ °शिष्यते–क., ने., स; प्रशस्यते–मु. म. पु.

चूचुकौ मण्डलस्यान्तर्यवमात्रावुभौ स्मृतौ ॥

द्वितालश्चापि विस्तारो वक्षःस्थलमुदाहृतम् ॥[1]

कक्षे षडङ्गुले प्रोक्ते बाहुमूलस्तनान्तरे ॥

चतुर्दशाङ्गुलौ पादौ अङ्गुष्ठस्तु द्विरङ्गुलः ॥

पञ्चाङ्गुलपरीणाहमङ्गुष्ठान्त[1]मथोत्तरम् ॥

अङ्गुष्ठस्य समा तद्वदायामे स्यात्प्रदेशि[2]नी ॥

तस्याः षोडशभागेन हीयते मध्यमाङ्गुली ॥

अनामिकाष्टभागेन कनिष्ठा चापि हीयते ॥

पर्वत्रयेण चाङ्गुल्यौ गुल्फौ द्व्यङ्गुलकौ [3]स्मृतौ ॥

पार्ष्णिद्व्यङ्गुल[4]मात्रास्तु कलयोच्चैः प्रकीर्तितः ॥

द्वि[5]पर्वाङ्गुष्ठकः प्रोक्तः [6]परिणाहेन सुव्रताः ॥

प्रदेशिनी परीणाहस्त्र्यङ्गुलः समुदाहृतः ॥

[7]कन्यसा चाष्टभागेन हीयते क्रमशो द्विजाः ॥

अङ्गुलेनोच्छ्रयः कार्यो ह्यङ्गुष्ठस्य विशेषतः ॥

तदर्धेन तु शेषाणामङ्गुलीनां समुच्छ्रयः ॥

जङ्घा[8]ग्रे परिणाहस्तु अङ्गुलानि चतुर्दश[9] ॥

कुण्ठा[10]मध्ये परीणाहस्तथैवाष्टादशाङ्गुलः ॥

जानूच्छ्रयोङ्गुलः प्रोक्तो मण्डलं तु त्रिरङ्गुलम् ॥

---

१ °ष्ठाग्रं तथोत्तरे–क , °ष्ठाग्रं तथोन्नतम्–मु. म. पु. २ °शनी–क. ३ मतौ–मु. पा. ४ °मात्रा तु कलायोच्चा प्रकीर्तिता–स. ५ पर्वांगुष्ठकः–क., पर्वाङ्गुष्ठकः–स. ६ परिणाहश्च द्व्यङ्गुलः–मु. पा. ७ कनिष्ठिकाष्टभागेन–मु. म. पु. पाठः. ८ °घामध्ये परीणाह अङ्गुलानि–क. ९ °श ष्टादशांगुलः-जानुमध्ये परीणाहः एकविंशति चाङ्गुलः । जानूछ्रेयोंगुलः–क. १० °कुंघाम,–ने° स, जंघामध्ये–मु. म. पु., ५३०. क्र. ५

ऊरुमध्ये परीणाह अष्टाविंशतिकाङ्गुलः ॥

[1]एकविंशोपरिष्टाच्च वृषणौ तु त्रिरङ्गुलौ ॥

[2]द्व्यङ्गुलं च तथा मेढ्रं परिणाहे षडङ्गुलम् ॥

[3]मणिबद्धोदयो विद्यात्कोशरेखास्तथैव च ॥

[4]मणिकस्य परिणाहश्चतुरङ्गुल इष्यते ॥

विस्तारेण भवेत्तद्वत्कटिरष्टादशाङ्गुला ॥

[5]द्वात्रिंशतिस्तथा स्त्रीणां स्तनौ च[6] द्वादशाङ्गुलौ ॥

नाभिमध्ये परीणाहो द्विचत्वारिंशदङ्गुलः ॥

पुरुषे पञ्चपञ्चाशत्कट्यां चैव तु वेष्टनम् ॥

कक्षयोरुपरिष्टात्तु स्कन्धौ प्रोक्तौ षडङ्गुलौ ॥

[7]अष्टाङ्गुलास्तु विस्तारो ग्रीवां चैव विनिर्दिशेत् ॥

परिणाहे तथा ग्रीवां कला द्वादश निर्दिशेत् ॥

आयामो भुजयोस्तद्वद्विचत्वारिंशदङ्गुलः ॥

कार्ये तु बाहुशिखरे प्रमाणे षोडशाङ्गुलम् ॥

ऊर्द्धं यद्बाहु[8]पर्वन्तु विद्यादष्टादशाङ्गुलम्[9] ॥

तथैकाङ्गुलहीनं तु द्वितीयं पर्व उच्यते ॥

बाहुमध्ये परीणाहो भवेदष्टादशाङ्गुलः ॥

षोडशोक्तः [10]प्रबाहुस्तु षट्कलोग्रकरोपमः[11] ॥

---

१ एकत्रिंशोपरि°–क, स, मु. म. पु. ५३०. २ त्रिरङ्गुलं तथा मे°–क.

३ मानसवोदयं विद्यात् कोशविंश्च तथैव च ।

मानकोशपरीणाहश्चतुरङ्गुल इष्यते ॥ इति क.,

मणिवन्धादधो विद्यात्केशरेखास्तथैव च–मु. म. पु. पाठः. ४ मणिकोशपरीणाहः–मु. म. पु. पाठः. ५ द्वाविंशति–स. ६ वा for च–ने. ७ अष्टाङ्गुलां तु विस्तारे ग्रीवां–स. ८ पर्वे तु–ने, पर्यन्तं मु. म. पु. पा. ९ °लः–क. १० प्रवाहस्तु–स. ११ मतः–क, मु. म. पु. पा.

सप्ताङ्गुलं करतलं पञ्च मध्याङ्गुली मता ॥
अनामिका मध्यमायां सप्तभागेन हीयते ॥
तस्यास्तु पञ्चभागेन कनिष्ठा परिहीयते ॥
मध्यमायास्तु हीनो वै पञ्चभागेन तर्जनी ॥
अङ्गुष्ठात्तर्जनीमूलादधः प्रोक्तस्तु मध्यमः ॥
अङ्गुष्ठपरिणाहस्तु विविज्ञेयश्चतुरङ्गुलः ॥
शेषाणामङ्गुलीनां तु भागो भागेन हीयते ॥
मध्यमा मध्यपर्वं तु अङ्गुलं[1]द्वयमायतम् ॥
[2]यवो यवेन सर्वासां तस्यास्तस्याः प्रहीयते ॥
अङ्गुष्ठपर्वमध्यन्तु [3]तर्जन्यां सदृशं भवेत् ॥
यवद्वयाधिकं तद्वदग्रपर्व उदाहृतम् ॥
पूर्वार्द्धेन [4]नखान्विद्यादङ्गुलीषु समन्ततः ॥
स्निग्धं श्लक्ष्णं प्रकुर्वीत [5]ईषद्रक्तं तथाग्रजम् ॥
निम्नपृष्ठं भवेन्मध्यं[6] पार्श्वतः कलयोच्छ्रितम् ॥
तथैव केश[7]वल्लर्यः स्कन्धोपरि दशाङ्गुलाः ॥
स्त्रियः कार्यास्तु [8]विद्वद्भिः स्तनोरुजघनाधिकाः ॥
चतुर्दशाङ्गुलायाममुदरं तासु निर्दिशेत् ॥
नानाभरणसंपन्नाः किञ्चिच्छ्लक्ष्णभुजाः [9]शुभाः ॥
किञ्चिद्दीर्घं भवेद्वक्त्रमलकावलिरुत्तमा ॥
नासा ग्रीवा ललाटं च सार्द्धमात्रं त्रिरङ्गुलम् ॥
[10]अध्यर्द्धाङ्गुलविस्तारः शस्यतेऽधरपल्लवः ॥

---

१ °ष्ठद्वय°–क, °गुलद्वय°–स. २ यवो यवस्तु–स. ३ °न्यासदृशं–ने. ४ नधान्–क, पर्वार्धे तु नखान्विद्यात्–मु. म. पु. पाठः. ५ भास्वद्रक्तं तथा–क, ईषद्रक्तं तथाग्रतः–मु. पा. ६ °ध्ये-क, मु. पाठः ७ वलयः–क, वल्लीयं–मु. पा. ८ तन्वङ्गयः–मु. पा. ९ °स्ततः–मु. पा. १० अर्धार्धाङ्गुल°–क.

अधिकं नेत्रयुग्मन्तु चतुर्भागेन निर्दिशेत् ॥
[1]ग्रीवावल्लीश्च कर्तव्या किञ्चिदर्धाङ्गुलोच्छ्रया ॥
एवं नारीषु सर्वासु देवानां प्रतिमासु च ॥
नवतालमिदं प्रोक्तं लक्षणं पापनाशनम् ॥

## [[2]मत्स्यपुराण — २५९]

### [सूत उवाच]

अतः परं प्रवक्ष्यामि देवाकारा[3]न् विशेषतः ॥
दशतालस्मृतो रामो बलिर्वैरोचनिस्तथा ॥
वाराहो नारसिंहश्च सप्ततालश्च[4] वामनः ॥
मत्स्यकूर्मौ च निर्दिष्टौ यथाशोभं स्वयंभुवा ॥
अतः परं प्रवक्ष्यामि रुद्रा[5]र्चाकारमुत्तमम् ॥
सपीनोरुभुजस्कन्धस्तप्तकाञ्चन[6]सुप्रभः ॥
[7]शुक्लानुरश्मिसङ्घातश्चन्द्राङ्कितजटो विभुः[8] ॥
द्विरष्टवर्षाकृतिभृज्जटामुकुटशोभितः ॥
बाहूवारणहस्ताभौ वृत्तजङ्घोरुमण्डलः ॥
ऊर्ध्वकेशस्तु[9] कर्तव्यो दीर्घायतविलोचनः ॥
व्याघ्रचर्म[10]परीधानः कटिसूत्रत्रयान्वितः ॥
हारकेयूरसंपन्नो [11]भुजंगाभरणस्तथा ॥
बाहवश्चापि कर्तव्या नानाभरणभूषिताः ॥

---

१ °वलिश्च क°–क, ग्रीवावलिश्च–मु. पा, स. २ [ ] कोष्ठान्तर्गतो भागः मुद्रितपुस्तकात् उद्धृतः। अयञ्च भागः वर्तितव्य इति च भाति। कुतः? अतः परमिति नवपञ्चाशदधिकद्विशततमा (२५९) ध्यायस्यारभ्यमाणत्वात् ३ °रं वि°–क. ४ °स्तु–ने, मु. पा., स. ५ °धाकार for र्चाकार–मु. म. पु. ६ सप्रभः–ने, मु. पु., स. ७ शुक्लोर्क–मु. पु. ८ °भुः। जटामकुटधारी च द्विरष्टवर्षाकृतिः–क. ९ °श्च for स्तु–मु. पु. १० परीधानाः–स. ११ भुजगाभरण°–स.

पीनोरुगण्डफलकः कुण्डलाभ्यामलङ्कृतः ॥
आजानुलम्बबाहुश्च सौम्यमूर्तिः सुशोभनः ॥
खेटकं वामहस्ते तु [1]खड्गश्चैव तु दक्षिणे ॥
शक्तिं दण्डं त्रिशूलं तु[2] दक्षिणेषु निवेशयेत् ॥
कपालं वामपार्श्वे तु नागं खट्वाङ्गमेव च ॥
एकश्च वरदो हस्तो [3]धृताक्षवलयोऽपरः ॥
वैशाखं स्थानकं [4]कुर्यान्नृत्याभिनयसंस्थितौ[5] ॥
[6]नृत्ये दशभुजः कार्यो गजासुरवधे तथा ॥
तथा त्रिपुरदाहे च बाहवः षोडशैव तु ॥
[7]शङ्खचक्र[8]गदाः शङ्कु घण्टा तत्राधिका भवेत् ॥
तथा धनुः पिनाकं च शरो विष्णुमयस्तथा ॥
चतुर्भुजोष्टबाहुर्वा [9]ज्ञानयोगेश्वरो मतः ॥
तीक्ष्णनासाग्रदशनः करालवदनो महान् ॥
भैरवः शस्यते लोके प्रत्यायतनसंस्थितः ॥
न मूलायतने कार्यो भैरवस्तु भयङ्करः ॥
नरसिंहो वराहो वा तथान्ये[10]पि भयङ्कराः ॥
नाधिकाङ्गी न हीनाङ्गी कर्तव्या देवता क्वचित् ॥
स्वामिनं घातयेन्न्यूना करालवदना तथा ॥
अधिका शिल्पिनं हन्यात् कृशा चैवार्थनाशिनी ॥

---

१ प्रजा चैव तु द°–क. २ च for तु–मु. पु. ३ तथाक्ष for धृताक्ष–मु. पु. ४ कृत्वा for कुर्यात्–मु. पु. ५ °तः–मु. पा. ६ नृत्यन् दशभुजः कार्यो गजचर्मधरस्तथा–मु. पा. ७ शङ्खं चक्रं तथा शार्ङ्गं घण्टा तत्राधिका भवेत् for the whole line in मु. पु. ८ गदापद्मं घण्टा तत्रा°–क, गदाः शङ्कुर्घण्टा–स. ९ ज्ञातयोगेश्वरो–क. १० °न्योपि भयंकरः–क.

कृशोदरी तु दुर्भिक्षं [१]निमांसा धननाशिनी[२] ॥
दुःखदा हीनवक्त्रा तु पाणिपादकृशा तथा ॥
हीनाङ्गी हीनजङ्घा च भ्रमोन्मादकरी नृणाम् ॥
शुष्कवक्त्रा तु राजानं कटिहीना च या भवेत् ॥
पाणिपादविहीनायां जायते नरको महान् ॥
[३]जङ्घाहीना तु जान्वोर्वा शत्रुकल्याणकारिणी ॥
पुत्रमित्रविनाशाय हीना वक्षःस्थलेन[४] या ॥
[५]संपूर्णावयवाङ्गी तु आयुर्लक्ष्मीप्रदा सदा ॥
एवं लक्षणमासाद्य कर्तव्यः परमेश्वरः ॥
स्तूयमानः सुरैः सर्वैः समन्तात्कल्पयेद्भवम् ॥
शक्रेण नन्दिना चैव महाकालेन शङ्करम् ॥
प्रणता लोकपालाश्च[६] पार्श्वे तु गणनायकाः ॥
[७]नन्दिभृंगिरिटिश्चैव भूतवेताल[८]संवृतः ॥
सर्वे हृष्टास्तु कर्तव्याः स्तुवन्तः परमेश्वरम् ॥
गन्धर्वविद्याधरकिन्नराणामथाप्सरो गुह्यकनायकानाम् ॥
गणैरनेकैः शतशो महेन्द्र[९]मुनिप्रवीरैरपिनृ[१०]त्यमानम् ॥
धृताक्षसूत्रैः शतशः प्रवालपुष्पोपहारप्रचयं ददद्भिः ॥
संस्तूयमानं भगवन्तमाद्यं नेत्रत्रयेणामर[११]वर्यपूज्यम् ॥

[१२] **[ सूतउवाच ]**

[१३]अधुना संप्रवक्ष्यामि अर्धनारीश्वरं [१४]हरम् ॥

---

१ निर्मांसा–क. २ °नी। वक्रनासा तु दुःखाय संक्षिप्तांगाभयंकरी। चिपिटा दुःखशोकाय अनेत्रा नेत्रनाशिनी ॥ दुःखदा–क, ने, स, मु. म. पु. पाठः. ३ जङ्घाजानुविहीना च इति–मु. म. पु. ४ तु या–क. ५ सम्पूर्णावयवा या तु इति–मु. म. पु. ६ °स्तु for श्च–मु. म. पु. ७ नृत्यन् भृंगिरिटिश्चैव–क, नृत्यद्भृङ्गि–मु. म. पु. ८ संवृताः–मु. म. पाठः ९ महेन्द्रैः–मु. म. पु. १० नम्यमानम्–मु. म. पु. ११ °मर्त्य–मु. म. पु, मर्र (?)–स. १२ म. पु., २६०. १३ २६०, अध्यायारम्भः १४ परम्–मु. म. पु.

अर्द्धेन देवदेवस्य नारीरूपं सुशोभनम् ॥
ईशार्द्धे तु जटा[1]भारो बालेन्दुकलया [2]युतः ॥
उमार्द्धे [3]वापि दातव्यौ सीमन्ततिलकावुभौ ॥
वासुकिं दक्षिणे कर्णे वामे कुण्डलमादिशेत् ॥
बालिकारो[4]परिष्टात्तु कपालं दक्षिणे करे ॥
त्रिशूलं वाऽपि कर्तव्यं देवदेवस्य शूलिनः ॥
वामतो दर्पणं [5]कुर्यादुत्पलं तु विशेषतः ॥
वामबाहुश्च कर्तव्यः केयूरवलयान्वितः ॥
उपवीतं च कर्तव्यं मणिमुक्तामयं तथा ॥
स्तनभारमथोऽद्धर्वे तु वामे पीतं प्रकल्पयेत् ॥
[6]वामार्द्धमुज्वलं कुर्यात् श्रोण्यर्द्धं च तथैव च ॥
[7]लिङ्गवन्मूर्द्धकं कुर्यात् व्याघ्राजिनकृताम्बरम् ॥
वामे लम्बपरीधानं कटिसूत्रत्रयान्वितम् ॥
नानारत्नसमोपेतं दक्षिणं भुजगान्वितम् ॥
देवस्य दक्षिणं पादं पद्मोपरि सुसंस्थितम् ॥
किञ्चिदूर्ध्वं तथा [8]वामे भूषितं नूपुरेण तु ॥
रत्नैर्विभूषितान् कुर्यादङ्गुली[9]ष्वङ्गुलीयकम् ॥
[10]सालक्तकं तथा पादं पार्वत्या दर्शयेत्सदा ॥
अर्द्धनारीश्वर[11]स्येदं रूपमस्मिन्नुदाहृतम् ॥
उमामहेश्वरस्याऽपि लक्षणं शृणुत द्विजाः ॥

---

१ भागः for भारः-मु. म. पु. २ पुनः क., स. ३ चापि-क., मु. म. पु. ४ चोपरिष्टासु-मु. म. पु. ५ दद्यात्-मु. म. पु. ६ हारार्द्ध for वामार्द्ध-मु. म. पु. पृ. ५३२. ७ लिङ्गार्धमूर्द्धकं-मु. म. पु. ८ वामं-स. ९ °लीं अङ्गुलीयकान्-क, °कान्-ने, मु. म. पु, स. १० सालक्षकं-ने. ११ स्वादं-क.

संस्थानं तु तयोर्वक्ष्ये लीलाललितविभ्रमम् ॥
चतुर्भुजं द्विबाहुं वा जटाभारेन्दुभूषितम् ॥
लोचनत्रयसंयुक्त[1]मनेकस्कन्ध[2]पाणिकम् ॥
दक्षिणेनोत्पलं शूलं वामे [3]कुवलयं करे ॥
द्वीपिचर्मपरीधानं नानारत्नोपशोभितम् ॥
सुप्रतिष्ठं सुवेषं च तथार्द्धेन्दु[4]हुताशनम् ॥
वामे तु संस्थिता देवी [5]तस्याधो बाहुगूहिता ॥
शिरोभूषणसंयुक्तैरलकैर्ललितानना ॥
[6]शेवालिका कर्णवती ललाटतिलकोज्वला ॥
मणिकुण्डलसंयुक्ता कर्णिकाभरणान्विता ॥
हारकेयूरबहुला [7]हरवक्त्रविलोकिनी ॥
वामांसं देवदेवस्य स्पृशन्ती लीलया ततः ॥
दक्षिणं तु बहिः कृत्वा बाहुं दक्षिणतस्तथा ॥
[8]कण्ठे वा दक्षिणे कुक्षौ स्पृशत्यङ्गुलिजैः क्वचित् ॥
वामे च दर्पणं दद्यादुत्पलं वा सुशोभनम् ॥
कटिसूत्रत्रयं चैव नितम्बे स्यात्सलंबकम् ॥
[9]जयां च विजयां चैव कार्तिकेयविनायकौ ॥
पार्श्वयोर्दर्शयेत्तत्र तोरणे गणगुह्यकान् ॥
[10]प्रेता विद्याधरास्तद्वद्वीणा वानराप्सरो गणाः ॥
एतद्रूपमुमेशस्य कर्तव्यं भूतिमिच्छता ॥

---

१ उमैकस्कन्ध–मु. म. पु. २ पाणिनम्–स. ३ कुचभरे करम्–मु. म. पु. ४ कृतासनम्–मु. म. पु, सुनेषं च (?)? धेन कृताननम्–स. ५ त्रस्योरौ बाहुगूहिता–मु. म. पु, तस्याधो बाहुमूलिता–स. ६ सबालिका–मु. म. पु. ७ हरवक्त्रावलोकिनी–मु. म. पु. १६०, १६. ८ स्कन्धे वा मु. म. पु. २६०. १८. ९ °या च विजया चैव–क, ने, मु. म. पु. १० नानाविद्याधरास्तद्वत् वीणावादोप्सरो गणः–क, मालाविद्याधरास्तद्वत् वीणावानप्सरो गणः–मु. म. पु. २६०, २०.

शिवनारायणं वक्ष्ये सर्वपापविनाशनम् ॥

वामार्द्धे माधवं कुर्याद्दक्षिणे शूलपाणिनम् ॥

बाहुद्वयं च कृष्णस्य मणिकेयूरभूषितम् ॥

शङ्खचक्रधरं शान्तमारक्ताङ्गुलिविभ्र[1]मम् ॥

[2] [ चक्रस्थाने गदां वाऽपि पाणौ दद्यादधस्तले ॥

शङ्खं चोत्तरे दद्यात् कट्यर्धे भूषणोज्ज्वलम् ॥

पीतवस्त्रपरीधानं चरणं मणिभूषणम् ॥ ]

[3]दक्षिणार्द्धे जटाजूटमर्द्धेन्दुकृत[4]लक्षणम् ॥

भुजङ्गहारवलयं वरदं दक्षिणं करम् ॥

द्वितीयं चाऽपि कुर्वीत त्रिशूलवरधारिणम् ॥

व्यालोपवीतसंयुक्तं कट्यर्द्धे कृत्तिवाससम् ॥

मणिरत्नैश्च संयुक्तं पादं नागविभूषितम् ॥

शिवनारायणस्यैवं कल्पयेद्रूपमुत्तमम् ॥

महावराहं वक्ष्यामि पद्महस्तं गदाधरम् ॥

तीक्ष्णदंष्ट्रा[5]भतोरास्यं मेदिनी वामकूर्परे ॥

दंष्ट्राग्रेणोद्धृतां दान्तां धरणीमुत्पलान्विताम् ॥

विस्मयोत्फुल्ल[6]नयनां तूपरिष्टात्प्रकल्पयेत् ॥

---

१ °मम् । वक्त्रस्थाने गदां चापि पादौ दद्यादधस्तने ।
सव्यं चैव वने दद्यात् स्वर्णभूषणोज्वलम् ॥
पीतवस्त्रपरीधानं चरणं मणिभूषितं । दक्षिणर्द्धे°–क.

२ [ ] मु. म. पु, २६०, २१-२३. ३ दक्षिणार्द्धे जटाभारं–इति–मु. म. पु. पाठः. ४ भूषणम्–मु. म. पु. ५ °भ्रघोरास्यं–ने, स, °भ्रघोणास्यं–मु. म. पु. पाठः, ६ °वदनां–मु. म. पु. पाठः,

दक्षिणं कटिसंस्थं तु [1]करस्तस्य प्रकल्पयेत् ॥
कूर्मोपरि तथा पादमेकं नागेन्द्रमूर्द्धनि ॥
संस्तूयमानं लोकेशैः समन्तात्परिकल्पयेत् ॥
नारसिंहं प्रकर्तव्यं भुजाष्टकसमन्वितम् ॥
रौद्रं [2]सिंहासनं तद्वद्विदारितमुखेक्षणम् ॥
[3]तमपीनसटाकीर्णं दारयन्तं दितेः सुतम् ॥
विनिर्गतान्त्रजालं तु दानवं परिकल्पयेत् ॥
[4]वमन्तं रुधिरं [5]सम्यक् कथयामि यथा भवेत् ॥
सिंहपद्मासना सौम्या जटामुकुटमण्डिता ॥
शङ्खाब्जशूलवरदाः कमण्डलुकरा शुभाः ॥
चतुर्भुजा समाख्याता तथा चाष्टभुजान् शृणु ॥
वरदाभयखड्गमक्षसूत्रं च दक्षिणे ॥
दक्षिणे शूलचापं च चतुर्थे कटकं भवेत् ॥
एवं चाऽष्टभुजा देवी मङ्गला सर्वमङ्गला ॥
कर्तव्या चैव प्रासादे गृहे वाऽपि विशेषतः ॥
शक्रदेवी प्रकर्तव्या न गृहे सजटा शुभा ॥
ऊर्ध्वस्थिता गृहे घोरा रौद्री वाऽपि नरेश्वर ॥
नगरे कमलाध्यक्ष पद्मासीना शुभा मता ॥
हेमराजतताम्री वा महारत्नविभूषिता ॥

---

१ करं तस्य–क, ने, स; करं तस्याः–मु. म. पु. २ सिंहाननं–स. ३ तद्वत्पीनगदाकर्ढुं–क; तमस्मीपीनसटीकर्णं–ने; स्तब्धपीनसटाकर्णं–मु. म. पु.; कर्णं for कीर्णं–स. ४ वमन्तं रुधिरोद्गारं भ्रुकुटीवदनेक्षणम्। क, ने.; "वमन्तं रुधिरोद्गारं भ्रकुटीवदनेक्षणम्" एतदनन्तरं 'स' मातृकायां १३४ पुटस्यान्त्यपङ्क्त्या आरभ्य पठ्यमानोंशो लभ्यते ॥ (स folio १४६) १२६–१३४ पत्राणां स्थितं भागश्च १४२ पत्रे प्रथमश्लोकार्धादुपरि पठ्यते 'स' कोशे ॥ ५ घोरं भ्रुकुटीवदनेक्षणम्। इति मु. म. पु. पाठः (२६०, ३३).

शैली वा काञ्चनी वाऽथ कार्या देवी न चान्यथा ॥
हैमी ताम्री सीसकी वा राज्यं पुत्रांश्च राजती ॥
आरोग्यं चैव सौभाग्यं दद्याद्देवी तु ताम्रजा ॥
प्रासादे शैलजा श्रेष्ठा पुत्रायुर्धनदा मता ॥
राज्यदा सीसकेनाऽपि स्थापिता सर्वमङ्गला ॥
शैलजा न गृहे पूज्या अभावात्काष्ठजा शुभा ॥
श्रीवृक्षश्चन्दनोनिम्बोरिष्टः पुरदा....च ॥
ति....को....को विप्र श्रीपर्णी चाष्टमी मता ॥
किंतु काम्याऽधिकारेण निम्बारिष्टमयी मता ॥
कन्यसा मध्यमा ज्येष्ठा प्रतिमा शुभदा मता ॥
सप्ताङ्गुलां समारभ्य यावच्च द्वादशाङ्गुला ॥
गृहेष्वर्चा समाख्याता प्रासादे वाऽधिका शुभा ॥

**मत्स्यपुराणे ( २६०, ५५ तः) —**

कात्यायन्याः प्रवक्ष्यामि रूपं दशभुजं तथा ॥
त्रयाणामपि देवानामनुकारानुकारिणीम् ॥
जटाजूटसमायुक्तामर्द्धेन्दुकृतलक्षणाम् ॥
लोचनत्रयसंयुक्तां [1]पद्मेन्दुसदृशाननाम् ॥
अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् ॥
नवयौवनसंपन्नां सर्वाभरणभूषिताम् ॥
सुचारुदशनां तद्वत्पीनोन्नतपयोधराम् ॥
त्रिभङ्गस्थानसंस्थानां महिषासुरमर्दिनीम् ॥

---

१ पूर्णेन्दुसदृशाननां–मु. म. पु. ५३४

त्रिशूलं दक्षिणे दद्यात्खड्गं चक्रं [1]तथैव च ॥
तीक्ष्णबाणं तथा शक्तिं वामतोऽपि निबोधत ॥
खेटकं पूर्णचापं च पाशमङ्कुशमेव च ॥
घण्टां वा परशुं वाऽपि वामतः सन्निवेशयेत् ॥
अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् ॥
शिरश्छेदोभवं तद्वद्दानवं खड्गपाणिनम् ॥
हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम् ॥
रक्तारक्ती[2]कृताङ्गं च [3]रक्तस्रावाविलेक्षणम् ॥
वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम् ॥
वमद्रुधिरवक्त्रं च देव्याः सिंहं प्रदर्शयेत् ॥
देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम् ॥
किञ्चिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ॥
स्तूयमानं च तद्रूपममरैः सन्निवेशयेत् ॥
इदानीं सुरराजस्य रूपं वक्ष्ये विशेषतः ॥
सहस्रनयनं देवं मत्तवारणसंस्थितम् ॥
पृथूरुवक्षोवदनं सिंहस्कन्धं महाभुजम् ॥
किरीटकुण्डलधरं [4]पीनगात्रभुजेक्षणम् ॥
[5]वज्रोत्पलधरं तद्वन्नानाभरणभूषितम् ॥
[6]पूजितं देवरोद्गारं भृकुटीवदनेक्षणम् ॥
[7]युध्यमानं तु कुर्वीत क्वचित् करणबन्धनैः ॥
परिश्रान्तेन दैत्येन तर्जमानं मुहुर्मुहुः ॥

---

१ क्रमादधः–मु. पु. २ रक्तरक्ती–इति मु. म. पु. ३ रक्तविस्फारितेक्षणम्–मु. म. पु. ५३४ ४ पीवरोरुभुजेक्षणम्–मु. म. पु. पाठः. ५ २६०, ६८ ६ वमन्तं रुधिरोद्गारं–ने, क; वमन्तं रुधिरं घोरं–इति मु. म. पु. (२६०, ३३) ७ मुद्गमानं च कुर्वीत–क.

[1]दैत्यान् प्रदर्शयेत्तत्र खड्गखेटकधारिणः ॥
स्तूयमानं [2]तदा विष्णुं दर्शयेदमराधिपैः ॥
तथा त्रिविक्रमं वक्ष्ये ब्रह्माण्डक्रमणो[3]ल्बणम् ॥
पादपार्श्वे तथा बाहुमुपरिष्टात्प्रकल्पयेत् ॥
अधस्ताद्वामनं तद्वत्कल्पयेत्सकमण्डलुम् ॥
दक्षिणे[4] दण्डकं दद्यान्मुखं दीनं प्रकल्पयेत् ॥
भृङ्गारधारिणं तद्वद्बलिं तस्य च पार्श्वतः ॥
बन्धनं चाऽपि [5]कुर्वीत गरुडं [6]चास्य दर्शयेत् ॥
मत्स्यरूपं तथा मत्स्यं कूर्मं कूर्माकृतिं न्यसेत् ॥
एवंरूपस्तु भगवान् कार्यो नारायणो हरिः ॥
ब्रह्मा कमण्डलुधरः कर्तव्यः स चतुर्मुखः ॥
हंसारूढः क्वचित् कार्यः क्वचिच्च कमलासनः ॥
वर्णेन पद्मगर्भाभश्चतुर्बाहुः शुभेक्षणः ॥
कमण्डलुर्वामकरे स्रुवं हस्ते तु दक्षिणे ॥
वामे दण्डधर[7]स्तद्वत्स्रुवं चाऽपि प्रदर्शयेत् ॥
मुनिभिर्देवगन्धर्वैः स्तूयमानं समन्ततः ॥
कुर्वाणमिव लोकांस्त्रीन् शुक्लाम्बरधरं विभुम् ॥
मृगचर्मधरं [8]वापि दिव्ययज्ञोपवीतिनम् ॥
आज्यस्थालीं न्यसेत्पार्श्वे वेदांश्च चतुरः पुनः ॥
वामपार्श्वे तु[9] सावित्री दक्षिणे च सरस्वती[10] ॥

---

१ दैत्यं...धारिणम्–इति मु. म. पु, २६०, ३५. २ तथा–मु. म. पु. ३ °णोज्वलम्–क. ४ छत्रिकां–क, मु. म. पु. २६०, ३७ ५ कुर्वन्तं–मु. म. पु. ६ तस्य–मु. म. पु. ७ °रं तद्वत्–मु. पाठः. ८ चापि–मु. म. पु. ९ °स्य सावित्रीं–मु. म. पु. २६०, ४४. १० °तीम्–मु. म. पु. पाठः.

अग्रे च ऋषयस्तद्वत्कार्याः पैतामहे पदे ॥
कार्तिकेयं प्रवक्ष्यामि तरुणादित्य[1]वर्चसम् ॥
कमलोदरवर्णाभं कुमारं सुकुमारकम् ॥
[2]गण्डकैश्चीरकैर्युक्तं[3] मयूरवरवाहनम् ॥
[4]स्थानीयके[5]तुनगरे भुजान्द्वादश क[6]ल्पयेत् ॥
चतुर्भुजः[7] क[ र्वटे स्यात् ]वने ग्रामे द्विबाहुकः ॥
शक्तिः पाशस्तथा खड्गः शरः शूलं तथैव च ॥
वरदश्चैक[8]हस्तः स्यादथवाऽ[9]भयदो भवेत् ॥
एते दक्षिणतो ज्ञेयाः केयूरकटकोज्वलाः ॥
धनुः पताकामुष्टिश्च तर्जनी [10]तु प्रसारिता ॥
खेटकं ताम्रचूडश्च वामहस्ते तु शस्यते ॥
[11]द्विभुजश्चेत्करे शक्तिर्वामे स्यात्कुक्कुटोपरि ॥
चतुर्भुजे शक्तिपाशौ वामतो दक्षिणे त्वसिः ॥
वरदोऽभयदो वापि दक्षिणः स्याद्वि[12]तीयकः ॥
विनायकं च[13] वक्ष्यामि गजवक्त्रं त्रिलोचनम् ॥
लम्बोदरं चतुर्बाहुं व्यालयज्ञोपवीतिनम् ॥
[14]शूर्पकर्णं बृहत्तुण्डमेकदंष्ट्रं पृथूदरम् ॥
[15]स्वदन्तदक्षिणकरे [16]कमलं चापरे तथा ॥
[17]लड्डुकं परशुं चैव वामतः परिकल्पयेत् ॥

---

१ °सप्रभम्–मु. म. पु. २६०, ४५ २ दण्डकै°–मु. म. पु. ३ मुक्तं–क. ४ स्थापयेत्स्वेष्ट-नगरे–मु.म. पु. ५ स्वेष्ट for केतु–ने., स. ६ कारयेत्–मु. म. पु. ७ °जं कर्कटे स्यात्–क. चतुर्भुजः खर्वटे स्याद्वने–इति मु. म. पु. २६०, ४७. ८ व for क.–मु. म. पु. ९ चाभयदो इति मु. म. पु. २६०. ४८ १० च प्रसारिका–क. ११ द्विभुजस्य करे–मु. म. पु. २६०, ५० १२ °तुरीयकः–मु. म. पु. १३ प्रवक्ष्यामि–क., मु. म. पु. १४ ध्वस्तकर्णं–मु. म. पु. २६०, ५३ १५ स्वदन्तं–मु. म. पु. १६ उत्पलं–मु. म. पु. २६०, ५३. १७ मोदकं–मु. म. पु.

[1]बृहन्तं क्षिप्रगमनं पीन[2]स्कन्धं द्विपाणिनम् ॥
[3]युक्तं बुद्धिकुबुद्धिभ्यामधस्तान्मूषकान्वितम् ॥

**देवीपुराणे—**

**ब्रह्मोवाच—**

अवताराः समासेन कथिता सर्वमङ्गला ।
प्रतिमालक्षणं सम्यक् कथयामि यथा भवेत् ॥
सिंहपद्मासना सौम्या जटामकुटमण्डिता ।
[4]सलक्ष्मसूलवरदा कमण्डलुधरा शुभा ॥
चतुर्भुजा समाख्याता तथा अष्टभुजां शृणु ।
वरदमभयं खड्गं अक्षसूत्रं तु दक्षिणे ॥
[5]दर्पणं शूलचापञ्च चतुर्थे खेटकं भवेत् ।
[6]एवमष्टभुजा देवी मङ्गला सर्वमङ्गला ॥
कर्तव्या चैव प्रासादे गृहे वापि विशेषतः ।
किन्तु ते कथयिष्यामि जटामकुटधारिणीम् ॥
प्रादेशमात्र कर्तव्या न गृहे सजटा शुभा ।
....न कर्तव्या कृता भयकरी मता ।
तथा चतुर्भुजा कार्या प्रासादे वा गृहेऽथवा ॥
ऊर्ध्वं स्थिता गृहे घोरा रौद्रा वापि नरेश्वर ।
नगरे कमलाध्यक्षा पद्मासीना शुभा मता ॥

---

१ बृहत्वाक्षिप्तवदनं–मु. म. पु. २६०, ५४ २ °स्कन्धांघ्रिपाणिकम्–मु. म. पु. ३ युक्तं तु ऋद्धिबुद्धिभ्या°–मु. म. पु. २६०, ५५ ४ (शङ्खाब्ज) शूलवरदा–स. ५ दक्षिणे–ने, स. ६ एवं चाष्टभुजा–स.

हेमराजत....स्तवो महाफणिविभूषिता ।
शैली वा तालिनी चाथ कार्या देवी न चाऽन्यथा ॥
[1]हेमोत्था राज्यदा सा राज्यपुत्रांश्च राजती ॥
आरोग्यं चैव सौभाग्यं दद्याद्देवी[2].... ॥
प्रासादे शैलजा श्रेष्ठा पुत्रामूर्धलकामदा । [ Sic ]
राज्यदा च विशेषेण स्थापिता सर्वमङ्गला ॥
शैलजालगृहे पूज्या अभावात् काष्ठजा शुभा ।
श्रीवृक्षचन्दनो [3]निम्बरिष्टः पुरदार च ॥
भित्वा कामधुको विप्र श्रीपर्णी चाष्टमी मता ।
किन्तु काम्याधिकारेण निम्बारिष्टमयी तथा ॥
कनिष्ठा[4]मध्यमो ज्येष्ठ प्रतिमा शुभदा मता ।
[5]मण्डा....लासमारभ्य यावच्च द्वादशाङ्गुला ॥
[6]गृहेसर्चा समाख्याता ग्रामादेव्याधिका शुभा ।

## मत्स्यपुराणे—

कात्यायन्याः प्रवक्ष्यामि रूपं दशभुजं तथा ॥
त्रयाणामपि देवानां....[7]रामुकारिणीं ॥
अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् ।

---

१ हैमी ताम्री सीसकी वा राज्यं पुत्राश्च राजती–स. २ देवी तु ताम्रजा–स. ३ निम्बोऽरिष्टः पुरदा–स. ४ °मध्यमा ज्येष्ठा–स. ५ सप्ताङ्गुला समारभ्य–स. ६ गृहेष्वर्चा समाख्याता प्रासादे वाधिका शुभा ॥ मत्स्यपुराणे–कात्यायन्याः etc.–स. ७ °अनुकारानुकारिणीम् ।
जटाजूटसमायुक्तामर्धेन्दुकृतलक्षणाम् ॥
लोचनत्रयसंयुक्तां पद्मेन्दुसदृशाननाम् ।
अतसीपुष्पवर्णाभां–स.

नवयौवनसम्पन्नां सर्वाभरणभूषिताम् ॥
सुचारुदशनां तद्वत् पीनोन्नतपयोधराम् ।
[1]त्रिभङ्गस्थानसंयुक्तां महिषासुरमर्दिनीम् ॥
त्रिशूलं दक्षिणे दद्यात् [2]शङ्खचक्रं तथैव च ।
[3]तीर्णवानं तथा शक्तिं वामतो विनिबोधत ॥
खेटकं पूर्णचापं च पाशमङ्कुशमेव च ।
घण्टां वा परशुं चापि वामतः [4]परिकल्पयेत् ।
अधस्तान्महिषं तद्वत् विशिरस्कं प्रदर्शयेत् ॥
शिरच्छेदोद्भवं तद्वत् दानवं खड्गपाणिनम् ।
हृदि शूले विनिर्भिन्नं निर्यदन्त्रविभूषितम् ॥
[5]चक्रवर्तिकृताङ्गस्य रक्तविट्चरितेक्षणम् ।
वेष्टितन्नागपाशेन भृकुटीभीषणाननम् ॥
वमद्रुधिररक्तं च देव्यास्सिंहं प्रदर्शयेत् ।
देव्यास्तु दक्षिणं पादं.... [6]सिंहोपरि स्थितम् ॥
[7]किञ्चित् पूर्णस्तथा वाममङ्गुष्ठं महिषोपरि ।
स्तूयमानश्च तद्रूपममरैस्सन्निवेशयेत् ॥
[8]तदानीं सुरराजस्य रूपलक्ष्मे विशेषतः ।
सहस्रनयनं देवं मत्तवा[9]रसमन्वितम् ॥
[10]पूज्योक्तरक्षोवदनं सिंहस्कन्धं महाभुजम् ।
किरीटकुण्डलधरं पीवरोरुभुजेक्षणम् ॥

---

१ त्रिभङ्गस्थानसंस्थानां–स. २ खड्गं–स. ३ तीक्ष्णं बाणं तथा–स. ४ संनिवेशयेत्–स. ५ रक्तरक्तीकृताङ्गस्य रक्तस्रावाविलेक्षणम्–स. ६ समं सिंहोपरि–स. ७ किञ्चिदूर्ध्वं तथा–स. ८ इदानीं–स. ९ °वारणसंस्थितम्–स. १० पृथूरुवक्षोवदनं–स.

[1]रक्तोत्पलधरं तद्वत् नागाभरणभूषितम् ॥
पूजितं देवगन्धर्वैरप्सरोगणसेवितम्[2] ।

**देवीपुराणे—**

**ब्रह्मोवाच—**

अवताराः समासेन कथिता सर्वमङ्गला ॥
[3]प्रतिमालक्ष्वगन्धर्वैरप्सरोगणसेवितम् ॥
छत्रचामरधारिण्यः स्त्रियः पार्श्वे तु [4]कल्पयेत् ॥
सिंहासनगतं वापि गन्धर्वगण[5]सेवितम् ॥
इन्द्राणीं वामतश्चास्य कुर्यादुत्पलधारिणीम् ॥
भास्करस्य प्रतिमामिदानीं शृणुत द्विजाः ॥
रथस्थं कारयेद्देवं पद्महस्तं सुलोचनम् ॥
सप्ताश्वं चैकचक्रं च रथं तस्य प्रकल्पयेत् ॥
मुकुटेन विचित्रेण पद्मगर्भसमप्रभम् ॥
नानाभरणभूषाढ्यं भुजाभ्यां धृतपुष्करम् ॥
स्कन्धस्थ पुष्करं चैव लीलयैव धृतं सदा ॥

---

१ वज्रोत्पलधरं तद्वन्नानाभरण°–स. २ °सेवितम् । छत्रचामरधारिण्यः स्त्रियः पार्श्वेऽनुकल्पयेत्–स.

३ प्रतिमालक्षणं सम्यक् कथयामि यथा भवेत् ।
सिंहपद्मानना सौम्या जटामुकुटमण्डिता ॥

इत्यादि ( १२६ पृष्ठस्य श्लोकमारभ्य )
किरीटकुण्डलधरं पीनगात्रभुजेक्षणम्
वज्रोत्पलधरं तद्वन्नानाभरणभूषितम्
पूजितं देव( गन्धर्वैः अप्सरोगणसेवितम् ) इति १३४ पृष्ठस्य श्लोकान्तोभागः अत्र पठ्यते, तत्र लुप्तश्च–स.

४ कारयेत्–क. ५ °संयुतम्–क.

चोलक[1]च्छन्नवपुषं क्वचिच्चित्रेषु दर्शयेत् ॥
वस्त्रयुग्मसरोपेतं चरणौ तेजसावृतौ ॥
प्रतीहारौ प्रकर्तव्यौ पार्श्वयोर्दण्डपिङ्गलौ ॥
कर्तव्यौ खड्गहस्तौ च पार्श्वयोः पुरुषावुभौ ॥
लेखनीकृतहस्तं च पार्श्वे धातारमव्ययम् ॥
नानादेवगणैर्युक्त[2]मेवं कुर्याद्दिवाकरम् ॥
अनूरुं सारथिं चास्य पद्मिनीपत्रसन्निभम् ॥
अश्वौ च वलितग्रीवावबन्धौ तस्य पार्श्वयोः ॥
भुजङ्गरज्जुभिर्बद्धाः सप्ताश्वा रश्मिसंयुताः ॥
[3]पद्मस्थं वा हयस्थं वा पद्महस्तं प्रकल्पयेत् ॥

**पद्मपुराणे[4]—**

अत एव रवेः पादौ न कश्चित्कारयेत्क्वचित् ॥
यः करोति स पापिष्ठो गतिं गच्छति निन्दिताम् ॥
कुष्ठरोगमवाप्नोति लोकेऽस्मिन् दुःखसंज्ञकम् ॥

**पुनर्मत्स्यपुराणे [ २६१, ९ तः ]—**

वह्नेस्तु लक्षणं वक्ष्ये सर्वकामफलप्रदम् ॥
दीप्तं सुवर्णवपुषमर्द्धचन्द्रासने स्थितम् ॥
बालार्कसदृशं तस्य वदनं चापि दर्शयेत् ॥
यज्ञोपवीतिनं देवं लम्बकूर्चधरं तथा ॥

---

१ ? °वह्निन्नवपुषं–स. २ °मेकं–क. ३ सप्ताश्वस्थं पद्महस्तं तस्मिंश्चैवाथ कल्पयेत्–क.
४ °णे–वह्नेस्तु लक्षणं वक्ष्ये–क.

कमण्डलुर्वामकरे दक्षिणे [1]वरसूत्रकम् ॥
ज्वालावितानसंयुक्तमजवाहन[2]मुत्तमम् ॥
कुण्डस्थं वाऽपि कुर्वीत मूर्ध्नि सप्तशिखान्वितम् ॥
तथा यमं प्रवक्ष्यामि दण्डपाशधरं विभुम् ॥
[3]महामहिषमारूढं कृष्णाञ्जनचयोपमम् ॥
सिंहासनगतं [4]वापि दीप्ताग्निसमलोचनम् ॥
महिषश्चित्रगुप्तश्च करालः किङ्करास्तथा ॥
समन्ता[5]द्दशगास्तस्य सौम्याऽसौ[6]म्याः सुरासुराः ॥
राक्षसेन्द्रं तथा वक्ष्ये लोकपालं च [7]नैर्ऋतम् ॥
नरारूढं महाकायं रक्षोभिर्बहुभिर्वृ[8]तम् ॥
खड्गहस्तं महा[9]नीलं कज्जलाचलसन्निभम् ॥
नरयुक्तविमानस्थं पीताभरणभूषितम् ॥
वरुणं च प्रवक्ष्यामि पाशहस्तं महाबलम् ॥
शङ्खस्फटिकवर्णाभं [10]शतहाराम्बरावृतम् ॥
[ वायुरूपं प्रवक्ष्यामि धूम्रं तु मृगवाहनम् ।
चित्राम्बरधरं शान्तं युवानं कुञ्चितभ्रुवम् ॥ ][11]
[12]वृषासनगतं शान्तं [13]किरीटवरधारिणम् ॥
[14]मृगादिरूढं वरदं पताकाध्व[15]जसंयुतम् ॥
कुबेरं च प्रवक्ष्यामि कुण्डलाभ्यामलङ्कृतम् ॥

---

१ यक्ष्मसू°–क, त्वक्ष°-ने, मु. म. पु, चाक्षसूत्रकम्–स. २ °मुज्वलम्–मु. म. पु. ३ सदा महिष°–स. ४ चापि–मु. म. पु. ५ °द्दर्शयेत्तस्य–मु. म. पु. ६ °म्यान् सुरासुरान्–मु. म. पु. ७ निर्मितम्–क. ८ वृतम् । नरयुक्त–क. ९ महालीलं–ने. १० सित for शत–मु. म. पु. २६१, १७ ११ supplied by मु. म. पु. २६१, १८-१९, and क. १२ झषा for वृषा–मु. म. पु. २६१, १८ १३ किरीटाङ्गदधारिणम्–मु. म. पु. १४ मृगाधिरूढं–स. १५ ध्वजसंकुलम्–स.

हारकेयूररुचि[1]रं नीलाम्बरधरं शुभम् ॥

गदाधरं च कुर्वीत[2] वरदं मुकुटान्वितम् ॥

महोदरं महाकायं निध्यष्टकसमन्वितम् ॥

गुह्यकैर्बहुभिर्युक्तं धनव्यग्रकरैस्तथा ॥

[3]तथैवेशं प्रवक्ष्यामि धवलं धवलेक्षणम् ॥

त्रिशूलपाणिनं देवं त्र्य[4]क्षं वृषगतं प्रभुम् ॥

मातॄणां लक्षणं वक्ष्ये यथावदनुपूर्वशः ॥

ब्र[5]ह्माणी ब्रह्मसदृशी चतुर्वक्त्रा चतुर्भुजा ॥

हंसाधिरूढा कर्तव्या साक्षसूत्रकमण्डलुः ॥

महेश्वरस्य रूपेण तथा माहेश्वरी मता ॥

जटामुकुटसंयुक्ता वृषस्था चन्द्रशेखरा ॥

कपालशूलखट्वाङ्ग[6]वरदाथ चतुर्भुजा ॥

कुमाररूपा कौमारी मयूरवरवा[7]हना ॥

रक्तवस्त्रधरास्तद्वच्छूलशक्तिधरा मता ॥

हारकेयूरसंपन्ना कृकवाकुधरा [8]मता ॥

वैष्णवी विष्णुसदृशी [9]गरुत्मति समा स्थिता ॥

चतुर्बाहुश्च वरदा शङ्खचक्रगदाधरा ॥

सिंहासनगता वापि बालकेन समन्विता ॥

वाराहीं च प्रवक्ष्यामि महिषोपरि संस्थि[10]ताम् ॥

वराहसदृशीं देवीं घण्टाचामरधारिणी[11]म् ॥

---

१ °रुधिरं शीताम्बर°–क. २ कर्तव्यं–मु. म. पु. २६१, २२ ३ तथैव संप्रवक्ष्यामि–क. ४ त्र्यक्षं च त्रिषभं प्रभुम्–क. ५ °ह्माणि–क., ने. ६ °वरदाय चतुर्भुजा–मु. म.पु. ७ °वाहिनी–क. ८ मता। कृकवाकः मर्कटः–वैष्णवी–क. ९ गरुडे समुपस्थिता–मु. म. पु. २६१, २८. १० °ता–क. ११ °णी–क., °धारिणीम् । गदाचक्रधरा तद्वद्दानवेन्द्रविनाशिनी ॥ मु. म. पु. २६१-३१

इन्द्राणीमिन्द्रसदृशीं वज्रशूलगदाधराम् ॥
[1]गजाधिरूढां तां देवीं लोचनैर्बहुभिर्वृताम्[2] ॥
तप्तकाञ्चनवर्णाभां वस्त्राभरणभूषिताम् ॥
तीक्ष्णखड्गधरां तद्वद्वक्ष्ये योगेश्वरीमिमाम् ॥
दीर्घजिह्वामूर्ध्वकेशामस्थिखण्डैश्च मण्डिताम् ॥
दंष्ट्राकरालवदनां कुर्याच्चैव कृशोदरीम् ॥
कपालमालिनीं देवीं मुण्डमालाविभूषिताम् ॥
कपालं वामहस्ते तु मांसशोणितपूरितम्[2] ॥
[3]सकेशं च शिरोऽन्यस्मिन् शक्ति[4]कां दक्षिणे करे ॥
[5]गृध्रस्था वाहनयुता निर्मांसा विगतोदरी ॥
करालवदना तद्वत्कर्त्तव्या सा त्रिलोचना ॥
चामुण्डा बद्धघण्टा च द्वीपिचर्मधरा शुभा ॥
दिग्वासाः कालिका तद्वद्रासभस्था कपालिनी ॥
सुरक्तपुष्पाभरणा वर्द्धनीध्वजसंयुता ॥
विनायकं च कुर्वीत मातृणां[6] सन्निधौ सदा ॥
वीरेश्वरश्च भगवान् वृषारूढो जटाधरः ॥
[7]वीणाहस्तस्त्रिशूली च मातृणामग्रतो भवेत् ॥
श्रियं देवीं प्रवक्ष्यामि नवे वयसि संस्थिताम् ॥
सुयौवनां पीनगण्डां रक्तौष्ठीं कुञ्चितभ्रुवम् ॥
पीनोन्नतस्तनतटां मणिकुण्डलधारिणीम् ॥

---

१ गजासनगतां देवीं–मु. म. पु. २६१, ३२ २ °ताम्–क. ३ मस्तिष्कात्कं च बिभ्राणां शक्तिकां दक्षिणे करे–मु. म. पु. २६१, ३५ ४ शत्क्किकां–क, मु. म. पु. ५ गृध्रस्था वायसस्था वा निर्मांसा त्रिनतोदरी–इति मु. म पु, २६१, ३६ ६ °णामन्तिके तदा–क, °णामन्तिके सदा–मु. पा. ७ त्रि for त्रि–क, ने, स.

[1]सुमण्डलं मुखं तस्याः शिरः सीमन्तभूषितम् ॥
पद्मस्वस्तिकशङ्खैर्वा भूषितां कुण्डलालकैः ॥
कञ्चुकाबद्धगा[2]त्रां च हारभूषौ पयोधरौ ॥
नागहस्तोपमौ बाहू केयूरकटकोज्ज्वलौ ॥
पद्मं हस्ते प्रदातव्यं श्रीफलं दक्षिणे [3]करे ॥
मेखलाभरणं[4] तद्वत्तप्तकाञ्चनसप्र[5]भाम् ॥
नानाभरणसंप[6]न्नां शोभनाम्बरधारि[7]णीम् ॥
पार्श्वे तस्याः स्त्रियः कार्याश्चा[8]मरव्यग्रपाणयः ॥
पद्मासनोपविष्टा तु पद्मसिंहासनस्थिता[9] ॥
करिभ्यां स्नाप्यमाना सा भृङ्गाराभ्यामनेकशः ।
[10]प्रतिपालयन्तौ करिणौ भृङ्गाराभ्यां तथापरौ ॥
स्तूयमाना च लोकेशैस्तथा गन्धर्व[11]किन्नरैः ॥
तथैव [12]यक्षिणी कार्या सिद्धासुरनिषेविता ॥
पार्श्वयोः कलश[13]स्तस्यास्तोरणे देवदानवाः ॥
नागाश्चैव तु कर्तव्याः खड्गखेटकधारिणः ॥
[14]अधः सर्पाकृतिस्तेषां नाभेरूर्ध्वं तु पौरुषी ॥
[15]फणाश्च मूर्ध्नि कर्तव्या द्विजिह्वाः बहवो [16]समाः ॥
पिशाचा राक्षसाश्चैव भूतवेतालजातयः ॥
[17]निर्मांसाश्चैव रुद्रास्ते सर्वे विकृतरूपिणः ॥

---

१ श्रीमण्डलं मुखं तस्याः–क. २ °त्रौ च हारभूषौ–क. ३ भुज इति–मु. म. पु. २६१, ४३ ४ °णा–ने, °णां–मु. म. पु. ५ °भा–ने, स. ६ °न्ना–ने, स. ७ °णी–ने, स. ८ चावदध्यग्र-पाणयः–क. ९ °ताम्–क. १० प्रक्षालयन्तौ–मु. म. पु. २६१. ४६ ११ °गुह्यकैः–क, मु. म. पु. १२ पक्षिणी कार्या–क. १३ कलशौ इति–मु. मे. पु. २६१, ४८ १४ अधस्तात् प्रकृतिस्तेषां–मु. पा. १५ फणाश्च–मु. पा. १६ °वः समाः–मु. पा. १७ निर्मांसाश्चैते सर्वे रौद्राविकृतरूपिणः–मु. पा.

[ [१]क्षेत्रपालश्च कर्त्तव्यो जटिलो विकृताननः ॥
दिग्वासा जटिलस्तद्वत् श्वगोमायुनिषेवितः ॥
कपालं वामहस्ते तु शिरः [२]केशसमावृतम् ।
दक्षिणे शक्तिकं दद्यात् असुरक्षयकारिणीम् ॥ ]
अथातः संप्रवक्ष्यामि द्विभुजं कुसुमायुधम् ॥
पार्श्वे [३]चास्य मुखं तस्य मकरध्वजसंयुतम् ॥
दक्षिणे पुष्पबाणं च वामे पुष्पमयं धनुः ॥
[४]प्रीतिः स्याद्दक्षिणे तस्य भोजनोपस्करान्विता[५] ॥
रतिश्च वामपार्श्वे तु शयनो[६]पस्करान्विता ॥
पटश्च पटहश्चैव खरः कामातुरस्तथा ॥
पार्श्वतो जलवापी च वनं नन्दनमेव च ॥
सुशो[७]भनश्च कर्तव्यो भगवान् कुसुमायुधः ॥
संस्थानमीषद्वक्त्रं स्यात् विस्मयस्थित[८]नेत्रकम् ॥
[९]एतदुद्देशतः प्रोक्तं प्रतिमालक्षणं मया ।
विस्तरेण न शक्नोति बृहस्पतिरपि द्विजाः ॥

## [१०][ सूत उवाच ]-

[११]पीठिकालक्षणं वक्ष्ये यथावदनुपूर्वशः ।
पीठोच्छ्रायं तथावच्च भागान् षोडश कारयेत् ॥
भूमावेकः[१२]प्रतिष्ठः स्याच्चतुर्भिर्जगती मता ॥
वृत्तो भागस्तथैकः स्याद्वृत [१३]पट्टस्त्रिभागतः ॥
भागैस्त्रिभिस्तथा कण्ठः कण्ठपट्टस्त्रिभागतः ॥

---

१ क and मु. म. पु., २६१, ५१-५२ २ 'केशाम्बराधृतं' इति–क. ३ चाश्वमुखं–मु. पा. ४ न प्रीतिस्यात्–क. ५ °न्वितम्–क. ६ शयनं सारसान्वितम्–क,. मु. म. पु. २६१, ५५ ७ °मितश्च–क. ८ त्वत्कक° for नेत्रकम्–मु. पा. ९ Two lines supplied by क and मु. म. पु., २६०, ५६-५७ १० मत्स्यपुराण- २६२, १ ११ पिण्डिका–ने. १२ °कः प्रविष्टः स्यात्–क; मु. म. पु, २६२, २ १३ वृत्तं यस्तुविभागतः–क; द्वृतः पटलभागतः–मु. म. पु.

भागाभ्यामूर्ध्व[1]कण्ठश्च शेषभागेन पट्टिका ॥
प्रविष्टं भागमेकैकं जगतीं यावदेव तु ॥
निर्गमस्तु पुनस्तस्य यावद्वै शेषपट्टिका ॥
वारिनिर्गमनार्थस्तु तत्र कार्यः प्रणालकः ॥
पिण्डिकानां तु सर्वासामेतत्सामान्यलक्षणम् ॥
विशेषं देवताभेदाच्छृणुध्वं द्विजसत्तमाः ॥
स्थण्डिला चाऽथ वापी च यक्षी वेदी च मण्डला ॥
पूर्णचन्द्रा च [2]वज्रा च पद्मा चार्द्ध[3]शशिस्तथा ॥
त्रिकोणा दशमी तासां संस्थानं च निबोधत ॥
स्थण्डिला चतुरस्रा तु वर्जिता मेखलादिभिः ॥
वापी द्विमेखला ज्ञेया यक्षी चैव त्रिमेखला ॥
चतुरस्रायता वेदी न तां लिङ्गेषु योजयेत् ॥
मण्डला [4]वर्तुला या तु [5]मेखला त्रिगुणा प्रिया ॥
[6]रिक्ता द्विमेखला मध्ये पूर्णचन्द्रा [7]प्रकीर्तिता ॥
मेखलात्रयसंयुक्ता षडस्रा वज्रिका भवेत् ॥
षोडशास्रा भवेत्पद्मा किञ्चि[8]द्ध्रस्वा च मूलतः ॥
तथैव धनुषाकारा सार्द्धचन्द्रा [9]प्रकीर्तिता ॥
त्रिशूलसदृशी तद्वत्त्रिकोणा ऊर्ध्वतो मता ।
प्रागुदक्प्रवणा तद्वत्प्रशस्ता लक्षणान्विता ॥
[10]परिबर्हत्रिभागेन ख्यातं चैतत्प्रमाणतः ॥

---

१ °पद्मस्तु–क; °पट्टश्च–मु. म. पु. २ वज्री च–स. ३ °शशी तथा–मु. म. पु. २६२, ७
४ वर्धना या तु–क. ५ मेखलाभिर्गणप्रिया–मु. म. पु. २६२, ९ ६ रक्ता–मु. म. पु. ७ तु सा भवेत् for प्रकीर्तिता–म. मु. पु. २६०, १० ८ °द्ध्रस्वा तु–मु. म. पु. ९ प्रशस्यते–मु. पाठः
१० परिवेह विभागेन निर्गमं तत्र कारयेन्–क.; परिवेषं विभागेण निर्गमं तत्र कारयेत्–मु. म. पु.

[1]विस्तारतः प्रमाणं च मूलं चार्द्धतदर्द्धतः ॥
जलमार्गश्च कर्तव्यस्त्रिभागेन सुशोभनः ॥
लिङ्गस्यार्द्धे[2]त्रिभागेन स्थौल्येन समधिष्ठिता ॥
मेखला तु [3]त्रिभागेन [4]ख्याता चैतत्प्रमाणतः ॥
अथ वा पादहीनं [5]च शोभनं कारयेत्सदा ॥
उत्तरस्थं [6]प्रमाणं च प्रमाणादधिकं भवेत् ॥
स्थण्डिलायामथाऽऽरोग्यं धनधान्यं च पुष्कलम् ॥
गोप्रदा तु भवेद्यक्षी वेदी संपत्प्रदा भवेत् ॥
मण्डलायां भवेत्कीर्तिर्वरदा पूर्णचन्द्रिका ॥
आयुष्प्रदा भवे[7]द्वज्रा पद्मा [8]सौभाग्यदायिनी ॥
पुत्रप्रदाऽर्द्धचन्द्रा स्यात्त्रिकोणा शत्रुनाशिनी ॥
देवस्य यजनार्थं तु [9]पिण्डिका दश कीर्तिताः ॥
शैले शैलमयीं दद्यात्पार्थिवे पार्थिवीं तथा ॥
दारुजे दारुजां कुर्या[10]न्मिश्रे मिश्रां तथैव च[11] ॥
नान्ययोनिश्च कर्तव्या सदा शुभफलेप्सुभिः ॥
अर्चायामसमं दैर्घ्यं लिं[12]ङ्गायामसमं तथा ॥
यस्य देवस्य या पत्नी तां पीठे परिकल्पयेत् ॥
[13]दैर्घ्यं यस्य देवस्य यावत्तां परिकल्पयेत् ॥
[14]एवं सर्वं समाख्यातं समासात्पीठलक्षणम् ॥

---

१ विस्तारं तत्प्रमाणं च मूले चाग्रे तथोर्ध्वतः–मु. म. पु. २ °विभागेन–मु. म. पु. ३ तत्त्रिभागेन–मु. म. पु. ४ खातं चैव प्रमाणतः–मु. म. पु. ५ तु for च–क; पदहीनं च–स ६ प्रणालं च–मु. म. पु. ७ °द्भूता–ने. ८ सौभाग्यदा भवेत्–मु. म. पु., २६२, १८ ९ पीठिका–मु. म. पु–२६२, १९ १० °मित्रे मैत्रं तथैव च–क. ११ च । अर्द्धवामत–ने. १२ °गयामसमं तथा–क. १३ Not found in मु. म. पु. १४ एवमेतत्समाख्यातं–क.; एतत्सर्वं समाख्यातं–मु. म. पु. २६२, २१.

## [1][ सूत उवाच ]

अथातः सम्प्रवक्ष्यामि लिङ्गलक्षणमुत्तमम् ॥
सुस्निग्धञ्च सुवर्णञ्च लिङ्गं कुर्याद्विचक्षणः ॥
प्रासादस्य प्रमाणेन लिङ्गमानं विधीयते ॥
लिङ्गमानेन वा विद्यात्प्रा[2]सादं शुभलक्षणम् ॥
चतुरस्रे समे गर्त्ते ब्रह्मसूत्रं निपातयेत् ॥
वामेन ब्रह्मसूत्रस्य अर्चायां[3] लिङ्गमेव तु ॥
प्रागुत्तरेण [4]नीलं तु दक्षिणापदमाश्रितम् ॥
पुरस्यापरदिग्भागे पूर्वद्वारे तु कारयेत् ॥
पूर्वेण चापरं द्वारं माहेन्द्रं दक्षिणोत्तरे ॥
द्वारं विभज्ज्य पूर्वं तु एकविंशतिभागिकम् ॥
ततो मध्यगतं ज्ञात्वा ब्रह्मसूत्रं प्रकल्पये[5]त् ॥
तस्यार्द्धं तु त्रिधा कृत्वा भागञ्चोत्तरतस्त्यजेत् ॥
[6]एक दक्षिणतस्त्यक्त्वा ब्रह्मस्थानं प्रकल्पयेत् ॥
भागार्धेन तु यल्लिङ्गं कार्यं तदिह शस्यते ॥
पञ्चभागे[7] विभक्ते तु त्रिभागे ज्येष्ठमुच्यते ॥
भाजिते नवधा गर्भे मध्यमः पञ्चभागिकः ॥
[8]एतस्मिन्नेव नवधा गर्भे लिङ्गानि कारयेत् ॥
समसूत्रं विभज्याथ नवधा गर्भभाजितम् ॥
[9]ज्येष्ठमर्धं कनीयोर्धं तथा मध्यममध्यमम् ॥

---

१ २६३ अध्यारम्भः. २ °सादश्शुभलक्षणः–ने. ३ °र्चां वा लिङ्गमेव वा–क; अर्चाया लिङ्गमेव च–मु. म. पु. २६३, ३ ४ नीलां तु–क; लीनं तु–मु. म. पु. ५ °येत् भागर्द्धेन–क. ६ एवं–मु. म. पु. ७ °गविभक्तेषु त्रिभागो–मु. पा.; °गविभक्तौ तु–स. ८ एकस्मिन्–मु. म. पु. २६३, ९ ९ ज्येष्ठार्धं कन्यसार्द्धं तु–क.

एवं गर्भः समाख्यातस्त्रिभिर्भागैर्विभाजयेत् ॥
ज्येष्ठं तु त्रिविधं ज्ञेयं मध्यमं त्रिविधं तथा ॥
कनीयस्त्रिविधं तद्वल्लिङ्गभेदा नवैव तु ॥
[१]नाभ्यर्द्धमष्टभागेन विभज्याथ समं बुधाः[२] ॥
भागत्रयं परित्यज्य विष्कम्भं चतुरस्रकम् ॥
अष्टास्रं मध्यमं ज्ञेयं भागं लिङ्गस्य [३]वै ध्रुवम् ॥
[४]विकर्णे तु ततो गृह्य कोणाभ्यां लाञ्छयेद्बुधः ॥
अष्टास्रं कारयेत्तद्वदूर्ध्वमप्येवमेव तु ॥
[५]षोडशास्रं कृतं पश्चाद्वर्तुलं कारयेत्ततः ॥
[६]आयामं तस्य देवस्य [७]नाभेर्वै कुण्डलीकृत[८]म् ॥
माहेश्वरं त्रिभागं तु [९]अर्द्धं वृत्तं तु यत्स्थितम् ॥
अधस्ताद्ब्रह्म[१०]भागे तु चतुरस्रो विधीयते ॥
अष्टास्रो वैष्णवो भागो मध्यस्थः स उदाहृतः ॥
एवं प्रमाणयुक्तं यल्लिङ्गं [११]तद्वदिदं भवेत् ॥
तथान्यदपि वक्ष्यामि गर्भमानं प्रमाणतः ॥
गर्भमानप्रमाणेन यल्लिङ्गमुचितं भवेत् ॥
चतुर्द्धा तद्विभज्याथ विष्कम्भं तु प्रकल्पयेत् ॥
[१२]तदेवमायतं सूत्रं [१३]भागत्रयं प्रकल्पयेत् ॥
अधस्ताच्चतुरस्रं तु अष्टास्रं मध्यभागतः ॥
[१४]पूर्वभागस्तथार्द्धे तु नाभिभागस्ततोच्यते ॥

---

१ नाहार्ध°–क. २ बुधः । नाहार्धं परिणाहार्धं–क ; बुधैः–इति मु. म. पु. ३ वै स्तवम्–स; वैष्णवं (?)–इति मूलमातृका. ४ विकीर्णे चेत्ततो–मु. पा. ५ षोडशास्रीकृतं–मु. पा. ६ आसमं-तस्य–क. ७ नाभ्यां वै कुण्डलीकृतम्–मु. पाठः ८ °तः–क ९ ऊर्द्ध्वंवृत्तं त्ववस्थितम्–मु. पा. १० °भागस्तु–ने; मु. पा. ११ वृद्धिप्रदं for तद्वदिदं–मु. म. पु. १२ देवतायतनं सूत्रं भागत्रय-विकल्पितम्–मु. पा. १३ भागत्रयविकल्पितम्–क. १४ अष्टभागस्ततोर्ध्वं तु–क; पूज्यभागस्ततोऽर्ध–मु. म. पु.

आयामे यद्भवेत्सूत्रं [1]वाहस्य चतुरस्रके ॥
चतुरस्रं परित्यज्य अष्टास्रस्य तु तद्भवेत् ॥
तस्याप्यर्द्धं परित्यज्य ततो वृत्तं तु कारयेत् ॥
शिरः प्रदक्षिणं तस्य संक्षिप्तं मूलतो [2]भवेत् ॥
[3]अष्टपूतं[4] भवेल्लिङ्गमधस्ताद्विपुलं [5]भवेत् ॥
[6]शिरसश्च यथा क्षिप्रं मनोज्ञं लक्षणान्वितम् ॥
सौम्यं तु दृश्यते यत्तु लिङ्गं [7]तद्बुद्धिदं भवेत् ॥
अथ मूले च मध्ये च प्रमाणं [8]सर्वतः समम् ॥
एवंविधं तु यल्लिङ्गं भवेत्त[9]त्सर्वकामिकम् ॥
अन्यथा यद्भवेल्लिङ्गं [10]तदशस्तं [11]प्रचक्षते ॥
एवं रत्नमयं कुर्यात्स्फाटिकं पार्थिवं तथा ॥
शुभं दारुमयं वापि यद्वा मनसि रोचते ॥

**देवीपुराणे—**

**ब्रह्मोवाच ॥**

शैलं ब्रह्मा हरिर्नित्यमिन्द्रनीलमयं यजेत् ॥
इन्द्रो मणिमयं चाथ यक्षो हैमं समर्चयेत् ॥
विश्वेदेवास्तथा रौप्यं वायुः पित्तलसम्भवम् ॥
[12]वसवः कांस्यजं देवमश्विनौ मृन्मयं पुनः ॥
स्फाटिकं जलदेवश्च[13] वह्निरत्नमयं यजेत् ॥
ताम्रं सूर्योऽर्चयेल्लिङ्गं सोमो मौक्तिकसम्भवम् ॥

---

१ नाहस्य for वाहस्य–मु. म. पु.; °(?)स्य तु चतुरस्रके–स. २ न्यसेत्–मु. पा. ३ भ्रष्टपूजं for अष्टपूतं–मु. म. पु. २६३, २२ ४ °यं–क. ५ च यत् for भवेत्–मु. म. पु. ६ शिरसा च सदा निम्नं–मु. म. पु. ७ तद्वृद्धिदं-मु. म. पु. ८ सर्वतप्तरम्–क. ९ °त्सार्वं–मु. पा. १०· तदसत्संप्रचक्षते–मु. म. पु. २६३, २३ ११ प्रवर्तत–ने. १२ वासवः–क. १३ °स्य–क; °श्च वह्नी रत्नमयं–स.

उरगा वैद्रुमं लिङ्गमायसं दानवोत्तमाः ॥
पिशाचास्त्रपुजं सैसं योगिन्यो भूतनायकाः ॥
गुह्यकास्ताम्रजं लिङ्गं [1]वज्रलोहं तु मानवाः ॥
पद्मरागं समस्तास्तु देवदानवमानवाः ॥
पूजयन्ति शुभार्थाय उभयत्र शुभावहम् ॥
वैडूर्यं ग्रहनक्षत्राः पुष्परागमहामणिम् ॥
[2]वार्क्षं वित्तप्रदं लिङ्गं स्फाटिकं सर्वकामद[3]म् ॥
नर्मदागिरिजं शैलमन्यद्वापि हि लिङ्गवत् ॥
कृत्वा पूजय विप्रेन्द्र लप्स्यसे ईप्सितं फलम् ॥
सुयोनिलक्षणोपेतं कर्तव्यं सिद्धिकामिना ॥
द्विजाहृतं तु यत्सिद्धं सर्वलक्षणलक्षितम् ॥
शैलमाणिक्यस्फटिकहेमराजतताम्रजम् ॥
पीठाङ्गं सविधिः सिद्ध यथा यस्य तथा कुरु ॥
स्थितन्तु [4]भवने सिद्धौ चतुर्वृत्तं सुखावह[5]म् ॥

## अथ प्रतिष्ठाकालः[6] ॥

**[तत्र] मत्स्यपुराणे [२६४, ३ तः] --**

[7]चैत्रे वा फाल्गुने वाऽपि ज्येष्ठे वा माधवे तथा ॥
माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥

---

१ वज्रलोका मारुवाः ?–स. २ राज्ञः–क; वाचा वित्तप्रदं–स. ३ °दम् ।
नाहं समं स्मरेक्षं च अपूपागण्डालिंगवत् ।
तद्वत् रूपस्य रूपेण वामलिङ्गं तथा कृतिम् ॥ नर्मदा–क.
४ भवते–क. ५ °वहं । कामाधिकारयोगेषु शेषाः कार्या मनीषिभिः–क. ६ °लाः–क.
७ प्रतिष्ठामयूखः (Gujarati Press Ed.), p. 2 cites this śloka from विष्णुधर्मोत्तरपुराण.

प्राप्य पक्षं शुभं शुक्लमतीते [1]दक्षिणायने ॥
पञ्चमी च द्वितीया च तृतीया सप्तमी तथा ॥
दशमी पौर्णमासी च तथा श्रेष्ठा त्रयोदशी[2] ॥
[3]तासु प्रतिष्ठा विधिवत्कृता बहुफला भवेत् ॥
आषाढे द्वे तथा मूलमुत्तरात्रयमेव च ॥[4]
ज्येष्ठाश्रवणरोहिण्यः पूर्वभाद्रपदा तथा ॥
हस्ताश्विनी रेवती च पुष्यो मृगशिरस्तथा ॥
अनुराधा तथा स्वातिः प्रतिष्ठादिषु शस्यते ॥
बुधो बृहस्पतिः शुक्रस्त्रय एते [5]शुभावहाः ॥
एभिर्निरीक्षितं लग्नं नक्षत्रं च प्रशस्यते ॥[6]
ग्रहताराबलं लब्ध्वा ग्रहपूजां विधाय च ॥
निमित्तं शकुनं लब्ध्वा वर्जयित्वाद्भुतादिकम् ॥
शुभयोगे शुभस्थाने क्रूरग्रहविवर्जिते ॥
लग्ने ऋक्षे [7]च कुर्वीत प्रतिष्ठादिकमुत्तमम् ॥
अयने विषुवे तद्वत्षडशीतिमुखे तथा ॥
एतेषु स्थापनं कार्यं विधिदृष्टेन कर्मणा ॥
प्राजापत्ये तु शयनं श्वेते तूत्थापनं तथा ॥

---

१ उत्तरायणे इति मातृके. २ Compare भविष्यपुराण, अ. १३४—
प्रतिपच्च द्वितीया च चतुर्थी पञ्चमी तथा ।
दशमी त्रयोदशी चैव पौर्णमासी च कीर्तिता ॥
३ आसु–मु. पा. ४ This śloka and the next are cited as from विष्णुधर्मोत्तर-पुराण in प्रतिष्ठामयूख, p. 2. ५ शुभग्रहाः–मु. म. पु. २६४, ८ ६ Compare भविष्यपुराण, १३४, ४—त्रिषूत्तरासु रेवत्यामश्विन्यां ब्राह्मये तथा ।
पुनर्वसोस्तथा हस्ते वासवे श्रवणेऽथ वा ॥
भरण्यां चापि नक्षत्रे भानोस्स्थापनमुत्तमम् ॥
७ प्रकुर्वीत–मु. म. पु., २६४, १०.

मुहूर्ते स्थापनं कुर्यात्पुनर्ब्राह्मे विचक्षणाः[1] ॥[2]

## अथ सूर्यप्रतिष्ठा[3]विधिः ॥

[तत्र] भविष्यपुराणे–[१३४, १–३]

प्रतिपच्च द्वितीया च चतुर्थी पञ्चमी तथा ॥
दशमी त्रयोदशी चैव पौर्णमासी तु कीर्तिता ॥
सोमो बृहस्पतिश्चैव शुक्रश्चैव बुधस्तथा ॥
एते सौम्यग्रहाः प्रोक्ता प्रतिष्ठायज्ञकर्मणि ॥
त्रिषूत्तरासु रेवत्यामश्विन्यां रोहिणीषु च ॥
हस्ते पुनर्वसौ चाऽपि पुष्येण श्रवणेन च ॥
भरण्यां चैव नक्षत्रे भानोः स्थापनमुत्त[4]मम् ॥
फाल्गुने मासि चैत्रे वा [5]ज्येष्ठे वैशाखयोरपि ॥
लिङ्गस्थापनमन्त्री तु कुर्याद्धोमं जितेन्द्रियः ॥
हरौ सुप्ते न कर्तव्यं [6]देवतास्थापनं बुधैः ॥
कर्तव्यं तु विबुद्धे तु [7]हंसे चाप्युत्तरं गते ॥
[8]सर्वकामसमृद्ध्यर्थं स्थापनमुत्तरायणे ॥
वर्जयेत्सर्वयत्नेन मन्त्रविद्दक्षिणायने[9] ॥
शुक्लपक्षे द्वितीयायां [10] स्थापितं फलदं भवेत् ॥

---

१ °णः–क; ने; स; मु. म. पु., २६४, १२. २ प्रतिष्ठामयूख adds p. 3 क्वचिन्निषेधः—

आर्द्रादिके स्वातिविरामकाले नक्षत्रवृन्दे दशके स्थितेऽर्के ।
विवाहचौलव्रतबन्धदीक्षासुरप्रतिष्ठादि न कार्यमेव ॥

३ विधौ भविष्यपुराणे–क. ४ °मम् ॥ तथा ॥ फाल्गुने–ने; स. ५ ज्येष्ठवैशाखयोरपि–स. ६ देवार्चां स्था°–ने; स. ७ हस्ते वाप्यु–क. ८ सर्वे–स. ९ °नम्–ने; स. १० स्थापयेत्परमेश्वरं ।

तृतीयायां चतुर्थ्यां च पञ्चम्यां च समा मतः ।
सप्तम्यां च दशम्यां च त्रयोदश्यां च मन्त्रवित् ॥
चतुर्दश.............................नव ॥
उत्तरासु च सर्वासु मूलाज्येष्ठानुराधयोः ॥

अभिचारप्रसिद्ध्यर्थं स्थापयेद्दक्षिणायने ॥
चन्द्रसूर्योपरागे च लिङ्गं न परिकल्पयेत् ॥
सगृहे स्थापितं लिङ्गं बाध्यन्ते चारिभिः प्रजाः ॥

**देवीपुराणे —**

सिंहसंस्थं गुरुं शुक्रं सर्वारम्भेषु वर्जयेत् ॥
आरब्धं न च सिध्येत महाभयकरं भवेत् ॥
पुत्रं वाऽथ कलत्राणि हन्याच्छीघ्रं न संशयः ॥
कारको व्रजते नाशं सन्तानः[1] क्षीयतेऽचिरात् ॥
देवारामतडागेषु प्रपोद्यानगृहेषु च ॥
सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत् ॥

**तथा —**

सर्वेषां चैव देवानामतीते चोत्तरायणे ॥
स्थापनं शुभदं प्रोक्तमन्येषां दक्षिणायने ॥
मातृभैरववाराहनरसिंहत्रिविक्रमाः ॥
महिषासुरहन्त्र्याश्च प्रतिष्ठा दक्षिणायने ॥
सर्वमङ्गलमङ्गल्या या देवी कथिता तव ॥
चैत्रे तस्याः प्रतिष्ठा च पूर्वोक्तविधिना शुभा ॥
आश्विने मासि सम्प्राप्ते अर्द्धरात्रे सिताष्टमी ॥

---

आर्द्रेसु पुष्ययोगेन षडशीतिमुखेन वा ॥
शुभेषु ग्रहयोगेन त्रिषु................ ॥
................सहस्रं स्थापितद्भवेत् ॥
अभिनवप्रसिध्यर्थं स्थापयेद्दक्षिणायने ॥
चन्द्रसूर्योपरा°–क.

[1] °नं–ने.

तत्काले स्थापिता देवी पूजिता च महा[1]बला ॥
यस्य देवस्य यः कालः प्रतिष्ठाध्वजरोहणे ॥
गर्त्तापूरशिलान्यासः शुभदस्तस्य भाषितः ॥
तथा दशभुजादेवी प्रतिष्ठादिविधा[2] स्मृता ॥
गुरौ मेषगते शक्र देव्यर्चां यः प्रतिष्ठयेत् ॥
इहैव स भवेद्धन्यो मृतो गच्छेत्परं पदम् ॥
तस्मान्मेषस्थिते शक्र उत्तमा नवमी मता ॥
महाव्याश्विमना(?)मानं तत्सर्वं सर्वकामदम् ॥
देवी तत्र सदा शक्र पांशुभिः स्थापिता अपि ॥
भवेत्तु फलदा पुसां कर्कस्थे च वृषध्वजे ॥
विशेषश्चात्र कथितः सर्वकालेऽपि मङ्गला ॥
येन केनाऽपि वित्तेन सर्वकामफलप्रदा ॥

## अथ स्थापकाः ॥ ७ ॥

[ तत्र ] **देवीपुराणे**—

**ब्रह्मोवाच —**

शिवस्य शिवसिद्धान्ते शैवे कार्या निवेशना ॥
गृही वा ब्रह्मचारी वा मुक्तिहेतोः प्रतिष्ठकः ॥
वामदक्षिणवेत्ता यो मातृवेदार्थपारगः ॥
स भवेज्ज्ञापकः श्रेष्ठो देवीनां मातुरेव च ॥
पञ्चरात्रार्थकुशलो मातृतत्त्वविशारदः ॥
विष्णोर्ग्रही मन्त्रवेत्ता ब्रह्मचारी च [3]साग्निकः ॥

---

१ °फला–ने. २ °धौ–ने, स. ३ शान्तिदः–क.

शिवशासनवेत्ता यो गृहमातृगणार्थवित् ॥
सौरार्थवेदकः सूर्यस्थापकस्तु शुभप्रदः ॥
वेदवेदार्थतत्त्वज्ञा ब्राह्मणा ऋत्विजो द्विजाः ॥
अन्येषु च स्वशास्त्रज्ञाः स्थापकाः पूजकाः शुभाः ॥
शैवाः सर्वेषु कुर्वन्ति ये गृहस्था द्विजोत्तमाः ॥
सर्वस्थापनमन्त्रार्थवेदकाश्चाधिकारिणः ॥
गरुवेतालतन्त्रे च भूततन्त्रे[1]षु दक्षिणे ॥
कालिके वामतन्त्रे च वेत्ता चार्यशुभावहः ॥
वि[2]स्येशगणलोकेशभूततन्त्रार्थविच्छिवे ॥
प्रादुर्भावक्रियाकारभेदसंस्कार............ ॥
देवीनां स्थापनं रूपं बुद्ध्वा कार्यनिवेशनम् ॥
विष्णोर्द्वादशभेदाः स्युर्मार्गादि विहितस्य च ॥
द्वाःस्थः कार्यक्रियां बुद्ध्वा स्थापना सा भवेच्छुभा ॥
अन्यथा कलहोद्वेगं कुर्यान्मृत्युं महाभयम् ॥
यजमाने नृपे राष्ट्रे स्थापके वै[3] निरागमे ॥
अविच्यादिषु पच्यन्ते विपरीता निवेशकाः ॥
विष्णोः शिवस्य ये ब्रह्मन् स्थापका विधिवर्जिताः ॥
प्रवरादिरवेर्बुद्ध्वा [4]कायानुन्....शुभावहा ॥
भयदा जायते शक्र [5]सामान्यथा वाऽपि कल्पना ॥
[6]प्रायशो मतभेदेन भिन्ना पूजा निवेशना ॥
बुद्ध्वा कार्या सुरश्रेष्ठ सर्वकामफलप्रदा ॥

१ थ–क. २ °धेश–क. ३ च–क. ४ संस्थाकार्या शुभावहा–क. ५ सान्यथा वापि कल्पना–क. ६ श्यामयामलभेदेन–क.

## अथाऽधिकारिणः ॥ ८ ॥

[ तत्र ] **देवीपुराणे —**

वर्णाश्रमविभेदेन देवाः स्थाप्या तु नाऽन्यथा ॥
ब्रह्मा च ब्राह्मणैः स्थाप्यो गायत्रीसहितः शुभः ॥
चतुर्वर्णैः स्थितो विष्णुः प्रतिष्ठाप्यः सुखार्थिभिः ॥
भैरवस्तु चतुर्वर्णैरन्त्यजानां तथा मतः ॥
मातरः सर्वलोकास्तु स्थापयन्ति सुरोत्तमाः ॥
लिङ्गं गृही यती वाऽपि संस्थाप्य पूजयेत्सदा ॥
आयूर्राज्यं तथा पुत्रं ददाति स्थापितो हरः ॥
किन्तु योगार्थिभिः स्थाप्यो योगेशो योगसंयुतः ॥
अन्यथा कलहोद्वेगः पुरे सञ्जायते भृशम् ॥

## अथ साधारणप्रतिष्ठा[1] ॥ ९ ॥

[ तत्र ] **मत्स्यपुराणे —**

[2]अथातः सम्प्रवक्ष्यामि प्रतिष्ठाविधिमुत्तमम् ॥
कुण्डमण्डपवेदीनां प्रमा[3]णं च यथाक्रमम् ॥
[4]प्रासादस्योत्तरे [5]चाऽपि पूर्वे वा मण्डपो भवेत् ॥
हस्तान् षोडश कुर्वीत दश द्वादश वा पुनः ॥
मध्ये वेदिकया युक्तः परिक्षिप्तः समन्ततः ॥

'परिक्षिप्तः परितः'

पञ्चसप्तचतुर्वाऽपि करा[6]न्कुर्वीत वेदिकाम् ॥
चतुर्भिस्तोरणैर्युक्तो मण्डपः स्याच्चतुर्मुखः ॥

---

१ °ष्ठाः—ने. २ २६४, २ ३ °णेन यथाक्रमम्—क. ४ २६४, १३ततः ५ वापि—स, क, ने, मु. म. पु. ६ °रां कुर्वीत—क.

प्लक्षद्वारं भवेत्पूर्वे याम्ये चौदुम्बरं भवेत् ॥
पश्चादश्वत्थघटितं नैयग्रोधं तथोत्तरे ॥
भूमौ हस्तप्रविष्टानि चतुर्हस्तानि चोच्छ्रये ॥
सूपलिप्तं तथा [1]लक्ष्णं भूतलं स्यात्सुशोभनम् ॥
वस्त्रैर्नानाविधैस्तद्वत्पुष्पपल्लवशोभितम् ॥
कृत्वैवं मण्डपं पूर्वं चतुर्द्वारेषु विन्यसेत् ॥
अव्रणान्कलशानष्टौ ज्वलत्काञ्चनगर्भिताम् ॥
चूतपल्लवसंयुक्तान् सितवस्त्रयुगान्वितान् ॥
[2]स्रक्चन्दनफलोपेतान् चन्दनोदकपूजि[3]तान् ॥
एवं निवेश्य [4]तान् गर्भे गन्धधूपार्चनादिभिः ॥
ध्वजाधिरोपणं कार्यं मण्डपस्य समन्ततः ॥
ध्वजा[5]श्च लोकपालानां सर्वदिक्षु निवेशयेत् ॥
पताका जलदाकारा मध्ये स्यान्मण्डपस्य तु ॥
गन्धधूपादिकं कुर्यात् स्वैः स्वैः मन्त्रैरनुक्रमात् ॥
बलिं च लोकपालेभ्यः स्वमन्त्रेण निवेदयेत् ॥
ऊर्ध्वं तु ब्राह्मणे देय अधस्ताच्छेषवासुकेः ॥
संहितायां तु ये मन्त्रास्तद्दैवत्याः [6]श्रुतौ स्मृताः ॥
तैः पूजा लोकपालानां कर्तव्या तु समन्ततः ॥
त्रिरात्रमेकरात्रं वा पञ्चरात्रमथापि वा ॥
अथवा सप्तरात्रन्तु कार्यं स्यादधिवासनम् ॥

---

१ श्लक्ष्णं–क. २ सर्वौषधिफलोपेतान्–मु. म. पु. २६४, १९ ३ °पूरितान्–ने. ४ तद्गर्भे–मु. पा. ५ °जांश्च–क. ६ शुभाः स्मृताः–इति मु. म. पु. २६४, २३

एवं सतोरणं कृत्वा अधिवासन[1]मण्डपम् ॥

तस्याप्युत्तरतः कुर्यात् स्नानमण्डपमुत्तमम् ॥

तदर्द्धेन त्रिभागेन चतुर्भागेन वा पुनः ॥

आनीय लिङ्गमर्चां वा शिल्पिनः पूजयेद्बुधः ॥

वस्त्राभरणरत्नैस्तु ये च तत्परिचारकाः ॥

क्षमध्वमिति तान् ब्रूयाद्यजमानस्ततः परम् ॥

देवं प्रस्तरणे कृत्वा नेत्रज्योतिः प्रकल्पयेत् ॥

[2]लक्षणोरुद्धरणं वक्ष्ये लिङ्गस्याऽपि समासतः ॥

सर्वतस्तु बलिं [3]दत्वा सिद्धा[4]र्थघृतपायसैः ॥

शुक्लपुष्पैरलङ्कृत्य घृतगुग्गुलधूपितम् ॥

विप्रवाचनकं कुर्याद्दत्वा शक्त्या च दक्षिणाम् ॥

[5]गामेकां कनकं तद्वत्स्थापकाय निवेदयेत् ॥

लक्षणं कारयेद्भक्त्या मन्त्रेणानेन वै द्विजाः ॥

ॐ नमो भगवते तुभ्यं, शिवाय हर[6]ये नमः ॥

हिरण्यरेतसे विष्णो विश्वरूपाय ते नमः ॥

मन्त्रोऽयं सर्वदेवानां नेत्रज्योतिष्वपि स्मृतः ॥

एवमामन्त्र्य देवेशं काञ्चनेन विलेखयेत् ॥

मङ्गलानि च वाद्यानि ब्रह्मघोषं च [7]गीतकम् ॥

---

१ °मुत्तमम्–मु. म. पु. २६४, २५ २ अक्षणोरुद्धरणं–मु. म. पु. २६४, २९ ३ दद्यात्–इति मु. म. पु. २६४, २९ °ज्ञं घृतपायसं–क. ५ गां महीं–मु. म. पु. २६४, ३१ ६ परमात्मने–मु. म. पु. २६४, ३२ ७ सगीतकम्–मु. पा.

वृध्यर्थं कारयेद्विद्वान् [1]मङ्गलस्य [2]निबर्हणम् ॥
लक्षणोद्धर[3]णं कुर्याल्लिङ्गस्य तु समाहितः ॥
त्रिधा विभज्य पूज्यायां लक्षणं स्याद्वि[4]भागिकम् ॥

### [5]रुद्रभागः ॥

[6]रेखात्रयं तु कर्तव्यं [7]यवाद्यन्तरसम्मितम् ॥
न स्थूलं न कृशं तद्वदवक्रं छेदवर्जितम् ॥
[8]निम्नं यवःप्रमाणेन श्रेष्ठलिङ्गस्य कारयेत् ॥
[9]श्लक्ष्णाः ततस्तु कर्तव्या सप्तमध्यमकं न्यसेत् ॥
अष्टभागं ततः कुर्यात्त्यक्त्वा भागत्रयं बुधः ॥
लंबये[10]न्मणिरेखास्तु पार्श्वयोरुभयोः समाः[11] ॥
तावत्प्रलम्बयेद्विद्वान्यावद्भागचतुष्टयम् ॥
[ भ्राम्यते पञ्चभागोर्दूर्ध्वं कारयेत् सङ्गमं ततः ][12]
[13]रेखयोः सङ्गमे तद्वद्वौ भागौ [14]प्लष्टतो भवेत् ॥
एवमेतत्समाख्यातं समासाल्लक्षणं मया ॥
[15]अतः परं प्रवक्ष्यामि मूर्तिपानां तु लक्षणम् ॥
स्थापकस्य समासेन लक्षणं शृणुत द्विजाः ॥
सर्वावयवसम्पूर्णो वेदमन्त्रविशारदः ॥

---

१ मंगल्यं च निबर्हणम्–क, विद्वानमङ्गल–ने, स. २ विनाशनम्–मु. म. पु. ३ °तां कुर्या° –क, °णं वक्ष्ये–मु. पा. ४ °द्विभाजकम्–मु. म. पु. २६४, ३५ ५ पूजाङ्गं रुद्रभागः–क, लेखा–मु. पा. ६ पूजात्रयं च कर्तव्यं–क.; लेखात्रयं–मु. म. पु. ७ यवाष्टान्तरसंयुतम्–मु. पा. ८ निम्नापयःप्रमा–ने, ९ सूक्ष्मास्ततस्तु कर्तव्या यथा मध्यमके न्यसेन् -इति मु. म. पु. २६४, ३७ १० °रसप्तरेखास्तु–मु. म. पु. २६४, ३८ ११ समम् । नास्यां तु पञ्चभागोर्ध्वं कारयेच्च समंततः । तावत्–क. १२ Missing in the manuscripts. Supplied by the printed म. पु. १३ वेद्यायामङ्गलं तद्वत्–क, रेखयोस्सङ्गमं तद्वत् पृष्ठे भागद्वयं–इति मु. पा. १४ पृष्ठतो भ°–ने, स. १५ २६५ अध्यायारम्भः

पुराणवेत्ता तत्त्वज्ञो दम्भलोभविवर्जितः ॥

कृष्णसार[1]श्चरदेशे य उत्पन्नः शुभाकृतिः ॥

शौचाचारपरो नित्यं [2]पाखण्डकुलनिःस्पृहः ॥

समः शत्रौ च मित्रे च ब्रह्मोपेन्द्रहरप्रियः ॥

ऊहापोहार्थतत्त्वज्ञो वास्तुशास्त्रस्य पारगः ॥

आचार्यस्तु भवेन्नित्यं सर्वदोषविवर्जितः ॥

[3]मूर्तिपास्तद्विधाश्चैव कुलीना ऋजवस्तथा ॥

द्वात्रिंशत् षोडशावापि अष्टौ [4]वा श्रुतिपारगाः ॥

ज्येष्ठमध्यकनिष्ठास्तु मूर्तिपाः परिकीर्तिताः ॥

ततो लिङ्गमथार्चां वा नीत्वा स्नपनमण्डपम् ॥

गीतमङ्गलशब्देन स्नपनं तत्र कारयेत् ॥

पञ्चगव्यकषायेन मृद्भिर्भस्मोदकेन च ॥

[5]शौचं तत्र प्रकुर्वीत वेदमन्त्रचतुष्टयात् ॥

'समुद्रज्येष्ठमन्त्रश्च' 'आपोदेवी'ति चापरः ॥

'यासां राजेति'मन्त्रश्च 'आपोहिष्ठेति'चापरः ॥

[ 'यासां राजेति' 'यासां राजा वरुणो याति मध्य'इति मंत्रः ॥

एवं स्नाप्य ततो देवं पूज्य गन्धानुलेपनैः ॥

प्रच्छाद्य वस्त्रयुग्मेन 'अभिवस्त्रे'त्युदाहरन् ॥

उत्थापयेत्ततो देवमु'त्तिष्ठब्रह्मणस्पते' ॥

'आमूरजेति' च तथा'रथे तिष्ठे'ति चापरः ॥

---

१ °मये–मु. पु. २ पाषण्ड°–क. ३ ऋ°त्विजश्च द्विजाश्चैव–क.; मूर्तिपास्तु–मु. म. पु. ४ च–क. ५ शौचं राजा प्रकुर्वीत मन्त्रेण आपोदेवीति चापरः ।

यासां राजेति मन्त्रश्च आपोहिष्ठेति चापरः ।

समुद्रज्येष्ठमन्त्रेण समुद्रज्येष्ठाः सलिलमध्यादित्यनेन यासां वरुणायेति मध्यतेत्यादि मन्त्रः । एवं स्नाप्य ततो देवं–क.

'अभिवस्त्रा 'सुवसनानीत्यादि ॥ 'उत्तिष्ठ ब्रह्मणस्पते देवयन्त' इत्यनेन ॥ तथा 'आमूरजः प्रत्यावर्त्तये 'त्यनेन मन्त्रेण स्थापनं कुर्यात् ॥ 'रथे तिष्ठन्नयति वाजिन' इति ॥

'रथे ब्रह्मरथे' वाऽपि, धृतं शिल्पिगणेन च ॥

आरोप्य चानयेद्विद्वा'नाकृष्णेन' प्रवेशयेत् ॥

'आकृष्णेन रजसे 'त्यनेन मन्त्रेण प्रवेशनं कुर्यात् ॥

[1]ततः प्रस्तीर्य शय्यायां स्वापयेच्छनकै[2]र्भुवि ॥

कुशानास्तीर्य पुष्पाणि स्वापये[3]त्प्राङ्मुखं ततः ॥

ततस्तु निद्राकलशं वस्त्रकाञ्चनसंयुतम् ॥

शिरोभागे तु देवस्य जपन्नेव निधापयेत् ॥

'आपो देवी'ति मन्त्रेण 'आपोस्मान्मान्तरे 'ति च ॥

ततो दुकूलपट्टैश्चाच्छाद्य नेत्रोपधानकम् ॥

दद्याच्छिरसि देवस्य कौशेयं वा विचक्षणः ॥

मधुना सर्पिषाभ्यज्य तिलसिद्धार्थकैस्ततः ॥

'आप्यायस्वेति' मन्त्रेण 'या ते रुद्र शिवे 'ति च ॥

उपविश्यार्चयेद्देवं गन्धपुष्पैः समन्ततः ॥

सितं प्रतिसरं दद्यात् 'बार्हस्पत्ये 'ति मन्त्रतः ॥

'प्रतिसरं' हस्तसूत्रम् ॥

दुकूलपट्टैः कार्पासैर्नानाचित्रैरथाऽपि वा ॥

आच्छाद्य देवं सर्वत्र छत्रचामरदर्पणम् ॥

पार्श्वे[4] तु स्थापयेत्तत्र विमानं पुष्पसंयुतम् ॥

---

१ ततस्वास्तीर्णशय्यायां–क. २ °बुधः–क. ३ °त्प्रमुखं ततः–क. ४ 'पार्श्वतः'–इति मु. म. पु., २६५, १९.

रत्ना[1]न्योषधयस्तद्वद्गृहोपकरणानि च ॥
भाजनानि विचित्राणि शयनान्यासनानि च ॥
'अभि त्वा शूर' मन्त्रेण यथा विभवतो न्यसेत् ॥
क्षीरं क्षौद्रं घृतं तद्वद्भक्ष्यं [2]भोज्यं च पायसम् ॥
षड्विधै[3]स्वरसैस्तद्वत् समन्तात् परिपूजयेत् ॥
बलिं दद्यात्प्रयत्नेन मन्त्रेणानेन भूरिशः ॥
'त्र्यम्बकं यजामहे'ति सर्वतः शनकैर्भुवि ॥
मूर्त्तिपान् स्थापयेत्पश्चात् सर्वदिक्षु विचक्षणः ॥
चतुरो द्वारपालांश्च द्वारेषु विनिवेशयेत् ॥
'श्रीसूक्तं' 'पावमानं' तु 'सोमसूक्तं' सुमङ्गलम् ॥
तथा च शान्तिका[4]ध्यायमिन्द्रसूक्तं तथैव च ॥
रक्षोघ्नं च तथा सूक्तं पूर्वतो [5]बह्वृचः पठेत् ॥

'श्रीसूक्तं' हिरण्यवर्णां हरिणीमिति ॥ 'पावमानं' स्वादिष्टया मदिष्टयेत्यादि । 'सोमसूक्तं' त्वं सोम महेत्यादि ॥ 'सुमङ्गलं' कनिक्रद[ज्ज]नुषमित्यादि ॥ 'शांतिकाध्यायः' शन्नइन्द्राग्नी इत्यादि ॥ 'इन्द्रसूक्तं' यो जात एवेत्यादि ॥ 'रक्षोघ्नं सूक्तं' कृणुष्व-पाज इत्यादि ॥

[6]रुद्रान् पुरुषसूक्तं च श्लोकाध्यायं [7]च शुक्रियम् ।
तथैव मण्डलाध्यायमध्वर्युर्दक्षिणे जपेत् ॥

'रुद्रान्' नमस्ते रुद्र मन्यव इत्यादि मन्त्रान् ॥ 'पुरुषसूक्तं' सहस्रशीर्षा पुरुष इत्यादि ॥ 'श्लोका[8]ध्यायः' देव सवितः प्रसुव यज्ञमित्यादि ॥ 'शुक्रियं' ऋचं वाचं प्रपद्य इत्यादि ॥ 'मण्डलाध्यायः' आदित्यो वा एतन्मण्डलमित्यादि ॥ 'तैत्तिरीयक' मित्यादि ॥

---

१ °ओषधयस्तत्र–इति मु. म. पु. २६५, २०. २ भोज्यान्नपायसैः –इति मु. म. पु. २६५, २१ ३ °श्च र–क, ने, स. ४ °र्याय–क. ५ बह्वृचः जपेत्–इति मु. म. पु., २६५, २५ ६ रौद्रं पुरुषसूक्तं च–इति मु. म. पु. २६५ २६ ७ सशुक्रियम्–क, ने, मु. पा. ८ °ध्यायः आदित्यो वा एतन्मण्डलमित्यादि–ने, स.

'वामदेव्यं' बृहत्साम ज्येष्ठसाम रथन्तरम् ॥
तथा पुरुषसूक्तं तु रुद्रसूक्तं सशान्तिदम् ॥
भारुण्डानि तु सामानि छन्दोगः पश्चिमे जपेत् ॥

'वामदेव्यं' सामकयात इत्यस्यां ऋत्विग्गीतम् ॥
'बृहत्साम' यं त्वामिन्द्र हवामह इत्यस्यामृचि[ त्विग् ]गीतम् ॥
'ज्येष्ठसाम' मूर्द्धानं दिव इ[1]त्यस्यां गीतम् ॥
'पुरुषसूक्तं' सहस्रशीर्षा पुरुष इत्येतासु गीतम् ॥

'रुद्रसूक्तं' रुद्रसंहितायाम् 'आवो राजा तद्वो वर्ग आज्य दोहानि देवव्रतानीत्येतानि' ॥ 'शान्तिकाध्यायः' सामभिः प्रोक्तः ॥ 'भारुण्डानि सामानि' इमं स्तोममर्हत इत्यादीनि[2] ॥

अथर्वाङ्गिरसं तद्वन्नीलं रौद्रं तथैव च ॥
तथाऽपराजिता देवी [3]नीलसूक्तं सरौद्रकम् ॥
तथैव शान्तिकाध्यायमथर्वा चोत्तरे [4]जपेत् ॥
शिरःस्थाने तु देवस्य स्थापको होममाचरेत् ॥
शान्तिकैः पौष्टिकैस्तद्वन्मन्त्रैर्व्याहृतिपूर्वकैः ॥

'आथर्वणं सूक्तं' दोषो गायत्र रुद्रायेत्यादि ॥ 'आङ्गिरसं' 'अङ्गिरसो जन्मानी'त्यादि ॥ 'नीलरुद्रं' यामुद्भव इत्यादि ॥ 'अपराजितादेवी' परिवर्त्मानीत्यादि ॥ 'मधुसूक्तं' मधुव्वाता ऋतायत इत्यादि ॥ 'रुद्रसूक्तं' [5]भवां शर्वौ मृडतं माभियात'मित्यादि ऋक् । 'शान्तिकाध्यायः' शन्न इन्द्राग्नीत्यादि ॥ 'शान्तिकैः' शन्न इन्द्राग्नी भवतामवोभिरित्येतैस्त्रिभिः । 'पौष्टिकैः' [6]पुष्टिं नर एवाक्षिति[7]नष्टध्वी (पुष्टिर्नरण्वा क्षितिर्न पृथ्वी) ॥ 'गयस्फानोमीवहा' ॥ 'त्र्यम्बकं यजामह' इत्येतैस्त्रिभिः ॥

---

१ °त्यादि स्यात् गीतरथन्तरं अभित्वा शूरनोनुमेत्यस्यां गीतं पुरुषसूक्तं-क. २ °दीनि स्तोममर्हते इत्यथर्वाङ्गिरसं-क. ३ .मधुसूक्तं सरौ°-स. ४ पठेत्-क. ५ °दि शान्तिकाध्यायः-क. ६ पुष्टितरण्याक्षितिर्नपृथ्वी-क. ७ न पृथ्वी-ने; स.

पलाशोदुम्बराश्वत्था अपामार्गः [1]शमी तथा ॥
हुत्वा सहस्रमेकैकं देवं पादे तु संस्पृशेत् ॥
ततो होमसहस्रेण हुत्वा हुत्वा ततस्ततः ॥
नाभिमध्यं तथा वक्षः शिरश्चोपलभेत्पुनः ॥
हस्तमात्रेषु कुण्डेषु मूर्त्तिपाः सर्वतो दिशम् ॥
समेखलेषु कर्तव्यं योनिवक्रेषु चाऽऽदरात् ॥
वितस्तिमात्रा योनिः स्याद्गजोष्ठसदृशी तथा ॥
आयता छिद्रसंयुक्ता पार्श्वतः कलयोच्छ्रिता ॥
[2]कुण्डकण्ठानुसारेण सर्वतश्चतुरङ्गुला ॥
विस्तारेणोच्छ्रिता तद्वच्चतुरस्रा समा भवेत् ॥
[3]वेदीभित्तिं परित्यज्य त्रयोदशभिरङ्गुलैः ॥
एवं नवसु कुण्डेषु लक्षणं च[4] तदिष्यते ॥
आग्नेयशाक्रयाम्येषु होतव्यमुदगाननैः ॥
[5]मूर्तिपैर्लोकपालेभ्यो मूर्तिभ्यः क्रमशस्तथा ॥
तथा मूर्त्यधिदेवानां क्रमात्कुर्युः समन्ततः ॥
वसुधा वसुरेताश्च यजमानो दिवाकरः ॥
जलं वायुस्तथा सोम आकाशं चाष्टमं [6]स्मृतम् ॥
देवस्य मूर्तयश्चाष्टावेताः कुण्डेषु संस्मरेत् ॥
एतासामधिपान्वक्ष्ये ये [7]विप्रा मूर्तिपा मताः ॥
पृथिवीं पाति शर्वस्तु पशुपश्चाग्निमेव च ॥
यजमानं तथैवोग्रो रुद्रश्चादित्यमेव च ॥
भवो जलं सदा पाति वायुमीशान एव च ॥

---

१ समीं–क; शमी–ने, स. २ कुण्डकोलानु°–क; कुण्डात्कलानुसारेण–इति मु. म पु., २६५, ३५ ३ वेदीं–क. ४ चैव दृश्यते–मु. म. पु. २६५, ३६ ५ शान्तये for मूर्तिपैः–मु. म. पु. २६५, ३७ ६ मतम्–क. ७ पवित्रान्मूर्तिनामतः–मु. म. पु. २६५, ४०

महादेवस्तथा च[1]न्द्रो भीमश्चाकाशमेव [2]तु ॥
सर्वदेवप्रतिष्ठायां मूर्त्तिपा श्वेत एव तु ॥
एतेभ्यो वैदिकैर्मन्त्रैर्यथास्वं होममाचरेत् ॥
तथा शान्तिघटं कुर्यात्प्रतिकुण्डेषु सर्वतः ॥
शतान्ते वा सहस्रान्ते सुपूर्णाहुतिरिष्यते ॥
[3]समपादस्ततोर्द्धस्तु प्रशान्तात्मा विनिक्षिपेत् ॥
आहुतीनां [4]तु सम्पातं पूर्णे[5]कुण्डेषु विन्यसेत् ॥
मूलमध्योत्तमाङ्गेषु [6]देवं तेनावसेचयेत् ॥
स्थितं च स्नापयेत्तेन सम्पाताहुतिवारिणा ॥
प्रतियामेषु धूपं च नैवेद्यं [7]चन्दनोदकम् ॥
पुनः पुनः प्रकुर्वीत होमः कार्यः पुनः पुनः ॥
पुनः पुनश्च दातव्या यजमानेन दक्षिणा ॥
[8]नववस्त्रैस्तु ते सर्वे पूजनीया समन्ततः ॥
विचित्रहेमकटकैर्हेमसूत्राङ्गुलीयकैः ॥
वासोभिः शयनीयैश्च प्रतियामे च शक्तितः ॥
भोजनं चापि दातव्यं यावत्तस्याधिवासनम् ॥
बलिस्त्रिसन्ध्यं देयस्तु भूतेभ्यः सर्वतोदिशम् ॥
ब्राह्मणान्पूजयेत्पूर्वं शेषान्वर्णांस्तु कामतः ॥
रात्रौ महोत्सवः कार्यो नृत्यगीतकमङ्गलैः ॥
सदा पूज्याः प्रयत्नेन चतुर्थी[9]कर्मयावता ॥

---

१ °न्द्रम्–क, मु. म. पु. २६५, ४२ २ च–क. ३ समपादः पृथिव्यान्तु–मु. म. पु., २६५, ४४ ४ च संघातं–क. ५ °कुम्भेषु–क, ने, मु. पा., स. ६ देवान्तेनावसेचयेत्–क. ७ च फलोदकम्–क.; चन्दनादिकं–मु. म. पु. २६५, ४६ ८ सितवस्त्रैस्तु–क; सितवस्त्रैश्च–मु. पा. ९ कर्णयावता–क.

त्रिरात्रमेकरात्रं वा पञ्चरात्रमथापि वा ॥

सप्तरात्रमथो कुर्यात्क्वचित्सद्योऽधिवासनम् ॥

सर्वयज्ञफलो यस्मादधिवासोत्सवस्तथा ।[1]

**सूत उवाच [ अ. २६६ १ तः ]**

कृत्वाऽधिवासं देवानां [2]श्वभ्रं कुर्यात्समाहितः ॥

[3]प्रासादस्यानुरूपेण मानं लिङ्गस्य वा पुनः ॥

पुष्पोदकेन प्रासादं प्रोक्ष्य मन्त्रयुतेन तु ॥

पातयेत्पक्षसूत्रं तु द्वारसूत्रं तथैव च ॥

आश्रयेत्किञ्चिदीशानीं मध्यं ज्ञात्वा दिशं बुधः ॥

ईशानीमाश्रितं देवं पूजयन्ति दिवौकसः ॥

आयुरारोग्यफलदं [4]तथैवोत्तरमाश्रितम् ॥

शुभं स्यादशुभं प्रोक्तमन्यथा स्थापनं बुधैः ॥

अधः कूर्मशिला प्रोक्ता सदा ब्रह्मशिलाधिका ॥

उपर्यवस्थिता [5]तस्माद् ब्रह्मभागाधिका शिला ॥

ततस्तु पिण्डिका कार्या पूर्वोक्तैर्मानलक्षणैः ॥

ततः प्रक्षालितं कृत्वा पञ्चगव्येन पिण्डिकाम् ॥

कषायतोयेन पुनर्मन्त्रयुक्तेन सर्वतः ॥

देवता[6]श्चाश्रयं मन्त्रं पिण्डिकासु नियोजयेत् ॥

तत उत्थाप्य देवेशमुत्तिष्ठ ब्रह्मणेति च ॥

आनीय गर्भभवनं पीठान्ते स्थापयेद्बुधः ॥

अर्घ्यपाद्यादिकं तत्र मधुपर्कं प्रयोजयेत् ॥[7]

ततो मुहूर्तं विश्रम्य रत्नन्यासं समाचरेत् ॥

---

१ २६५ अध्यायस्समाप्तः २ शुभं कुर्यात्–इति मु. म. पु. २६६, १ ३ प्रमादाच्चानुसारेण–क; ४ अथोत्तरसमाश्रितं–मु. म. मु. २६६, ४ ५ तस्या–मु. पु. ६ °च्चाश्रमं–क; चश्रियं–ने. ७ Three lines Missing in ह : supplied by क, ने, स and मु. म. पु. २६६, ८-९

वज्रमौक्तिकवैदूर्यशङ्खस्फाटिकमेव च ॥
पुष्परागेन्द्रनीलश्च नीलं पूर्वादितः क्रमात् ॥
[1]तालकं च शिलावज्रमञ्जनं श्याममेव च ॥
काङ्क्षी[2]कासीरमाक्षिकं गैरिकं चादितः क्रमात् ॥

'तालकं' हरिताल[3]म् ॥ 'शिला'मनःशिला ॥ 'वज्रं' चन्द्रकान्तः ॥ 'श्यामाञ्जनं' सौवीराञ्जनम् ॥ 'कांक्षी'तुवारका ॥ 'माक्षिकं' अत्र सुवर्णमाक्षिकं ॥ 'गैरिकं'चादितः ॥

गोधूमं च यवं तद्वत्तिलं मुद्गं तथैव च ॥
नीवारमथ श्यामाकं सर्षपं व्रीहिमेव च ॥
[4]न्यसेत्क्रमेण पूर्वादि चन्दनं रक्तचन्दनम् ॥
अगु[5]रुं वीजनं चैव उशीरं च ततः परम् ॥
वैष्णवीं [6]सहदेवीं च लक्ष्मणां च ततः परम् ॥
स्वर्लोकपालनाम्ना तु न्यसेदोङ्कारपूर्वकम् ॥
सर्वबीजानि धातूंश्च रत्नान्योषधयस्तथा ॥
काञ्चनं पद्मरागं च पारदं पद्ममेव च ॥
कूर्मं धरां [7]वृषं तत्र न्यसेत्पूर्वादितः क्रमात् ॥
[8]ब्रह्मस्थाने तु दातव्याः संहताः स्युः परस्परम् ॥
[9]पुलकं विद्रुमं ताम्रं कांस्यं चैवाऽऽरकूट[10]जम् ॥
रजतं विमलं पुष्पं लोहं चानुक्रमेण च ॥

'[11]पुलकं' रोमकम् अयस्कान्तविशेषः । विमरि त्रिविधं रविमंडलम् । 'कांस्यं' विमलमिति प्रसिद्धम् । 'पुष्प'मिति लोहविशेषो यत्र पंकजाकारा बिन्दवो भवन्तीति ।

---

१ तालकं हरितालकं सर्षपं व्रीहिमेव च–क. २ काशी समाक्षीकं–मु. म. पु. २६६, ११ ३ °तालकं–ने; स. ४ न्यस्यक्रमेण पूर्वादिचन्दनोरक्तचंदनम्–क. ५ °रूं चाञ्जनञ्चैव उशीरं–क; °चाञ्जनञ्चापि–मु. म. पु. २६६, १३ ६ सहदेवां–स. ७ वृषस्तद्वत् न्यसे–क. ८ ब्रह्मास्थानेषु यातव्या–क. ९ पुष्पकं–क; कनकं–मु. म. पु. २६६, १७ १० °कम्–क, मु. म. पु. २६६, १७ ११ पूरकं–क.

काञ्चनं हरितालं च सर्वाभावेऽपि निक्षिपेत् ॥
दद्याद्बीजौषधिस्थाने सहदेवीं यवानपि ॥
न्यासमन्त्रांस्तथा वक्ष्ये लोकपालात्मकानिह ॥
इन्द्रस्तु सहसा दीप्तः सर्वदेवाधिपो महान् ॥
वज्रहस्तो महासत्त्वस्तस्मै नित्यं नमो नमः ॥
आग्नेयः पुरुषो रक्तः सर्वदेव[1]मयोऽऽव्ययः ॥
धूमकेतुरनाधृष्यस्तस्मै नित्यं नमो नमः ॥
यमश्चोत्पलवर्णाभः किरीटी दण्ड[2]धरस्तथा ॥
धर्मसाक्षी विशुद्धात्मा तस्मै नित्यं नमो नमः ॥
नैर्ऋतस्तु पुमान् कृष्णः सर्वरक्षोधिपो महान् ॥
खड्गहस्तो महासत्त्वस्तस्मै नित्यं नमो नमः ॥
[1]वरुणः [2]शावलो विष्णुः परुषो निम्नगाधिपः ॥
पाशहस्तो महाबाहुस्तस्मै नित्यं नमो नमः ॥
वायुश्च सर्ववर्णोऽयं सर्वगन्धवहः शुभः ॥
पुरुषो ध्वजहस्तश्च तस्मै नित्यं नमो नमः ॥
गौरो यस्तु पुमान् सौम्यः सर्वौषधिसमन्वितः ॥
नक्षत्राधिपतिः सोमस्तस्मै नित्यं नमो नमः ।
ईशानपुरुषः शुक्लः सर्वविद्याधिपो महान् ॥
शूलहस्तो विरूपाक्षस्तस्मै नित्यं नमो नमः ॥
पद्मयोनिश्चतुर्मूर्तिर्वेदवासाः पितामहः ॥
[1]यज्ञाध्यक्षश्चतुर्वक्त्र[2]स्तस्मै नित्यं नमो नमः ॥
योऽसावनन्तरूपेण ब्रह्माण्डं सचराचरम् ॥
पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमो नमः ॥

---

१ °मयश्शिखी–इति मु. म. पु. १६६, २०   २ °धृक् सदा–मु. म. पु. २६६.२१
३ These two lines are omitted in क.   ४ धवलो–मु. म. पु., २६६, २२
७ फलाध्यक्ष–ने.   ८ स्ततोनित्यं नमो नमः–क.

ॐकारपूर्वका ह्येते न्यासे बलिनिवेदने ॥
मन्त्राः स्युः सर्वकार्याणां वृद्धिपुत्रफलप्रदाः ॥
[1]न्यासं कृत्वा तु मन्त्राणां पायसेनानु[2]लेपनम् ॥
पटेनाच्छादये[3]च्छुभ्रं शुक्केनोपरि यत्नतः ॥
तत उत्थाप्य देवेशमिष्टांशे तु सुशोभने ॥
भुवा द्यौरिति मन्त्रेण श्वभ्रोपरि निवेशयेत् ॥
ततः स्थिरी[4]कृतस्यास्य हस्तं दत्त्वा तु मस्तके ॥
ध्यात्वा परमसद्भावाद्देवदेवं तु निष्कलम् ॥
देवव्रतं तथा सोमं रुद्रसूक्तं तथैव च ॥
आत्मानमीश्वरं कृत्वा नानाभरणभूषितम् ॥
यस्य देवस्य यद्रूपं तद्ध्याने संस्मरेत्तदा ॥
अतसीपुष्पसंकाशं शङ्खचक्रगदाधरम् ॥
संस्थापयामि देवेशं देवो भूत्वा जनार्दनम् ॥
[5]त्र्यम्बकं [6]दशबाहुं च चन्द्रार्द्धकृतशेखरम् ॥
गणेशं वृषसंस्थं तु स्थापयामि त्रिलोचनम् ॥
ऋषिभिः संस्तुतं देवं चतुर्वक्त्रं जटाधरम् ॥
पितामहं महाबाहुं स्थापयाम्यम्बुजोद्भवम् ॥
सहस्रकिरणं [7]भानुमप्सरोगण[8]सेवितम् ॥
पद्महस्तं महाबाहुं स्थापयामि दिवाकरम् ॥
[9]वेदमन्त्रांस्तथा रौद्रान्रुद्रस्य स्थापने जपेत् ॥
विष्णोस्तु वैष्णवांस्तद्व[10]द्ब्राह्मान्वै ब्रह्मणो बुधः ॥
सौराः सूर्यस्य जप्तव्यास्तथाऽन्येषु तदाश्रयाः ॥

---

१ न्यासं कृत्वा चरान्नानां पायसेनानुलेपितम्–क. २ °लेपितम्–मु. म. पु., २६६, ३०. ३ °छवं शुक्लेनोपरि–क. ४ °कृतिस्यास्य–क. ५ अक्षरं–मु. म. पु., २६६, ३६ ६ च सुबाहुं च–क. ७ शान्तं–मु. म. पु., २६६, ३८. ८ °सयुतम्–मु. म. पु., २६६, ३८. ९ देवमन्त्रान्–मु. म. पु., २६६, ३९ १० °ब्राह्मणान् ब्राह्मणो–क.

वेदमन्त्रप्रतिष्ठा तु यस्मादानन्ददायिनी ॥
स्थापयेद्यं तु देवेशं प्रधानं तं प्रकल्पयेत् ॥
तस्य पार्श्वस्थितानन्यान्स्मरे[1]त्तत्परिचारिणः ॥
[2]गणं नन्दिमहाकायं वृषं भृङ्गि रिटिं गुहम् ॥
[3]देवीं विनायकं चैव विष्णुं ब्रह्माणमेव च ॥
[4]बलाहकं चैव विष्णुं तथा ब्रह्माणमेव च ॥
रुद्रं शक्रं जयन्तं च लोकपालान् समन्ततः ॥
तथैवाप्सरसः [5]सर्वा गन्धर्वगणगुह्यकान् ॥
यो यत्र स्थापितो देवस्तस्य तान्परितः स्मरेत् ॥
आवाहयेत्तथा रुद्रं मन्त्रेणानेन यत्नतः ॥
यस्य सिंहा रथे युक्ता व्याघ्रभूतास्तथोरगाः ॥
ऋषयो लोकपालाश्च देवः स्कन्दस्तथा वृषः ॥
प्रियो गणो मातरश्च सोमो विष्णुःपितामहः ॥
नागो यक्षश्च गन्धर्वो ये च दिव्या नभश्चराः ॥
तमहं त्र्यक्षमीशानं शिवं रुद्रमुमापतिम् ॥
आवाहयामि सगणं सपत्नीकं वृषध्वजम् ॥

[6]ॐ आगच्छ, भगवन्ननुग्रहाय शिवो भव । शाश्वतो भव पूजां प्रतिगृह्णाण । [7]ॐ नमः स्वागतमनुस्वागतं भवतः । नमः सोमाय सगणाय । परिचारं प्रतिगृह्णातु भवान् मन्त्रपूर्वमिदमर्घ्यं पाद्यमाचमनीयमासनं ब्रह्मणाभिहितम् । नमो नमः स्वाहा ॥

---

१ °स्मरेत्परिवारितः–मु. म. पु., २६६, ४१ २ गणं नन्दिमहाकालं–क; मु. म. पु., २६६, ४२ ३ देवीं वलाहकं चैव विष्णुं ब्रह्माणमेव च–क. ४ Line missing in मु. म. पु. ५ °र्वान्–क.

६ आगच्छ भगवन् रुद्रानुग्रहाय शिवो भव ।
शाश्वतो भव पूजां मे गृहाण त्वं नमो वमः ॥

ओं नमः स्वागतं । भगवते नमः, ओं नमः सोमाय सगणाय सपरिवाराय प्रतिगृह्णातु भगवन् मन्त्रपूतमिदं सर्वमर्घ्यपाद्यम् इति–मु. म. पु., २६६, ४९ ७ ओं नमो नमः स्वागतमस्तु स्वागतं भवतः ।नमः सोमाय । सगणाय सपरिवाराय गृह्णातु भवान् । मन्त्रपूतमिदमर्घ्यं पाद्यमाचमनीयं च । आसनं च ब्रह्मणा विहितं । नमो नमः स्वाहा ।

ततः पुण्याहघोषेण ब्रह्मघोषैः सपुष्कलैः ।
स्नापयीत ततो देवं दधिक्षीरघृतेन च ॥
मधुशर्करया तद्वत्पुष्पगन्धोदकेन तु ॥
शिवध्यानैक[1]चित्तस्तु मन्त्रानेतानुदीरयेत् ॥

'यज्जाग्रतो दूरमुदेति ततो विराडजायत' इति । सहस्रशीर्षा पुरुष' इति च ॥ 'अभित्वा शूर नोनुम' इति । 'पुरुष एवेदं सर्वमि'ति ॥ 'त्रिपादूर्ध्व'मिति ॥ 'येनेदं भूत'मिति ॥ [2]नत्वा वां अन्य इति ॥

[3]सर्वानेतान् प्रतिष्ठासु जप्त्वा मन्त्रान् पुनः पुनः ।
चतु[4]ष्कृत्वा [5]स्पृशेद्देवं मूले मध्ये शिरस्यपि ॥
स्थापिते तु ततो देवे यजमानः [6]स्वमूर्तिपम् ॥
आचार्यं पूजयेद्भक्त्या वस्त्रालङ्कारभूषणैः ॥
दीनान्धकृपणांस्तद्वद्ये चाऽन्ये समुपस्थिताः ॥
ततस्तु मधुना देवं प्रथमेऽहनि लेपयेत् ॥
हरिद्रयाऽथ सिद्धार्थैर्द्वितीयेऽहनि तत्त्वतः ॥
चन्दनेन यवैस्तद्वत्तृतीयेऽहनि लेपयेत् ॥
[7]मनःशिलाप्रियङ्गुभ्यां चतुर्थेऽहनि लेपयेत् ॥
सौभाग्यशुभदं यस्माल्लेपनं व्याधिनाशनम् ॥
परं प्रीतिकरं नृणामेतद्वेदविदो विदुः ॥
[8]कृष्णाञ्जनं तिलं तद्वत्पञ्चमेऽहनि लेपयेत् ॥
षष्ठे तु सघृतं दद्याच्चन्दनं [9]पद्मकेसरम् ॥
रोच[10]नं नागपुष्पं च सप्तमेऽहनि दापयेत् ॥

---

१ °चेतास्तु–क. २ तदुवात्मन्यताति–क. ३ सर्वांस्तंभान्–क. ४ °पादः स्पृशेदंघ्रि मूले–क; चतुःकृत्वः–ने; मु. म. पु., २६६, ५३; स. ५ स्पृशदद्भिः इति–मु म. पु., २६६, ५३ ६ समूर्द्धिजम्–क; अथ मूर्तिपम्–मु. म. पु. २६६, ५४ ७ This line omitted by क. ८ कृष्णाजिनं तिलास्तद्वत् पंचमेपि निवेदयेत्–क. ९ पुष्प°–क. १० °चना–क; रोचनागरुपुष्पाब्ज–मु. म. पु, २६६, ५९

यत्र सद्योऽधिवासः स्यात्तत्र सर्वं निवेदयेत् ॥
स्थितं न चालयेद्देवमन्यथा दोषभाग् भवेत् ॥
पूरयेत्सिकताभिस्तु निश्छिद्रं सर्वतो भवेत् ॥
लोकपालस्य दिग्भागे यस्य सञ्ज्वलते विभुः ॥
तस्य लोकपतेः शान्तिर्देया[1]श्चेमाश्च दक्षिणाः ॥
इन्द्राय वारणं दद्यात्काञ्चनं चाल्पवित्तवान् ॥
अग्नेः सुवर्णमेव स्याद्यमस्य महिषं तथा ॥
अजं च काञ्चनं दद्या[2]न्नैरृते राक्षसं प्रति ॥
[3]वरुणं प्रति मुक्तानि सुश्लक्ष्णानि प्रदापयेत् ॥
रीतिकां वायवे दद्याद्वस्त्रयुग्मेन संयुताम् ॥
सोमाय धेनुर्दातव्या [4]रजतं सवृषं शिवे ॥
यस्यां यस्यां [5]संचलते शान्तिः स्यात्तत्र तत्र तु ॥
अन्यथा तु भवे[6]द्द्वारं भयं कुलविनाशनम् ॥
अचलं कारयेत्तस्मात्सिकताभिः सुरेश्वरम् ॥
अन्नं वस्त्रं च दातव्यं पुण्याहजयमङ्गलम् ।
त्रिपञ्चदशसप्तैव दिनानि स्यान्महोत्सवः ॥
चतुर्थेऽह्नि महास्नानं चतुर्थीकर्म कारयेत् ॥
दक्षिणा च पुनस्तद्वद्देया [7]तस्यापि यत्नतः ॥
देवप्रतिष्ठाविधिरेष तुभ्यं निवेदितः पापविनाशहेतोः ॥
यस्माद्बुधैः पूर्वमनन्तमुक्तमनेकविद्याधरदेव[8]जुष्टम् ॥

१ °याहेमाश्च दक्षिणाः–क. २ °न्नैरृतं–मु. म. पु., २६६, ६३ ३ वरुणं प्रतियुक्तावै मित्युक्तं तन्निदापयेत्–क. ४ राजतश्च वृषे शिवे–क; राजतं सवृषं शिवे–ने; राजतं वृषभं–मु. पा. ५ सञ्ज्वलते–क; न; स. ६ °द्देवी–क. ७ तत्रातिभक्तितः–मु. म. पु., २६६, ६८ ८ °पूज्यम्–मु. म. पु. २६६, ६९

**सूत उवाच [ २६७, १ तः ]—**

अथातः संप्रवक्ष्यामि देवस्नपनमुत्तमम् ॥
अर्धस्यापि समासेन शृणुध्वं विधिमुत्तमम् ॥
दध्यक्षतकुशाग्राणि क्षीरं दूर्वास्तथा मधु ॥
यवाः सिद्धार्थकास्तद्वदष्टाङ्गोर्घः फलैः सह ॥
गजाश्वरथ्यावल्मीकवराहोत्खातमण्डलात् ॥
अग्न्यागारात्तथा तीर्था[1]द्व्रदाद्गोमण्डलादपि ॥
कुम्भे तु मृत्तिकां दद्यादुद्धृताऽसीति मन्त्रवित् ॥
'शन्नो देवी ह्यपां' मन्त्र 'आपो हिष्ठेति' या ऋचः ॥
सावित्र्याऽऽदाय गोमूत्रं 'गन्धद्वारेति' गोमयम् ॥
आप्यायस्वेति गोक्षीरं दधिक्राव्णेति वै दधि ॥
तेजोऽसीति घृतं तद्वद्देवस्य त्वेति चोदकम् ।
कुशमिश्रं [2]क्षिपेद्विद्वान्पञ्चगव्यं समन्ततः ॥
स्नाप्याथ पञ्चगव्येन दध्ना शुद्धेन वै ततः ॥
दधिक्राव्णेति मन्त्रेण कर्तव्यमभिमन्त्रणम् ॥
आप्यायस्वेति पयसा तेजोऽसीति घृतेन च ॥
मधुव्वातेति मधुना ततः पुष्पोदकेन च ॥
सरस्वत्यै भैषज्येन कार्यं तस्याभिमन्त्रणम् ॥
हिरण्याक्षेति मन्त्रेण स्नापयेद्रत्नवारिणा ॥
कुशाम्भसा ततः स्नानं देवस्य त्वेति कारयेत् ॥
[3][ फलोदकेन च स्नानमग्न आयाहि कारयेत् ॥ ]
ततः [4]सुगन्धतोयेन सावित्र्या चाभिमन्त्रयेत् ॥
ततो घटसहस्रेण सहस्रार्द्धेन वा पुनः ॥

---

१ °व्रजाद्गोम–क; मु. म. पु;, २६७, ३ २ जपेद्विद्वान्–क. ३ मु. म. पु. २६७, १०; क.
४ °स्तु–मु. म. पु.,२६७, ११

तस्याप्यर्द्धेन वा कुर्या[1]दथवाऽष्टशतेन च ॥
[2]चतुःषष्ट्यर्धभागेन तदर्द्धार्द्धेन वा पुनः ॥
चतुर्भिरथवा कुर्याद्घटानामल्पवित्तवान् ॥
सौवर्णै राजतैर्वापि ताम्रैर्वारीतिकोद्भवैः ॥
कांस्यैर्वा पार्थिवैर्वाऽपि स्नापनं शक्तितो भवेत् ॥
सहदेवी वचा व्याघ्री बला चातिबला तथा ॥
शङ्खपुष्पी तथा सिंही अष्टमी तु सुवर्चला ॥
महौषध्यष्टकं ह्येतन्महा[3]स्नानं सुयोजयेत् ॥
यवगोधूमनीवारतिलश्यामाकशालयः ॥
प्रियङ्गवो व्रीहयश्च स्नानेषु परिकल्पयेत् ॥
स्वस्तिकं पद्मकं शङ्खमुत्पलं [4]कन्दकं तथा ॥
श्रीवत्सं दर्पणं तद्वन्नन्द्यावर्त्तमथाष्टकम् ॥
एतानि गोमयैः कुर्यान्मृदा वा शुभया ततः ॥
[5]पञ्चवर्णोदनं तद्वत्पञ्चवर्णं रजस्तथा ॥
[6]दूर्वा कृष्णबलिस्तद्वन्नीराजनविधिर्मतः ॥
एवं नीराजनं कृत्वा दद्यादाचमनं बुधः ॥
मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् ॥
ततो वस्त्रयुगं दद्यान्मन्त्रेणाऽनेन यत्नतः ॥
[7]वेदसूत्रसमायुक्ते यज्ञ[8]रुद्रसमन्विते ॥
सर्ववर्ण[9]शुभे देव वाससी [10]तेन निर्मिते ॥
ततस्तु चन्दनं दद्यात्समं कर्पूरकुङ्कुमैः ॥

---

१ °त्सपादेन शतेन वा–मु. म. पु., २६७, १२ २ चतुःषष्ट्या ततोर्द्धेन–मु. म. पु. ३ °स्नानेषु –ने; मु. पु. ४ कमलं–मु. म. पु. २६७, १७ ५ पञ्चवर्णादिकं तद्वत्–मु. म. पु., २६७, १८ ६ दूर्वाः कृष्णतिलान्दद्यात्–मु. म. पु., २६७, १९ ७ देव°–मु. म. पु. ८ °दान–मु. म. पु. २६७, २१ ९ °प्रभे देव–क. १० नव–क; ते विनिर्मिते–मु. म. पु., २६७, २१

इममुच्चारयेन्मन्त्रं दर्भपाणिः प्रयत्नतः ॥
शरीरं ते न जानामि चेष्टां नैव च नैव च ॥
[1]मया निवेदितं गन्धं प्रतिगृह्य [2]विलेपनम् ॥
चत्वारिंशत्ततो दीपान् दद्याच्चैव प्रदक्षिणाम् ॥
त्वं सूर्यचन्द्रज्योतींषि विद्युदग्निस्तथैव च ॥
त्वमेव सर्वज्योतींषि दीपोऽयं प्रतिगृह्यताम् ॥
[3]ततस्त्वनेन मन्त्रेण धूपं दद्यात् विचक्षणः ॥
वनस्पतिरसो दिव्यो गन्धाढ्यो गन्ध उत्तमः ॥
मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यताम् ॥
ततस्त्वाभरणं दद्यान्महाभूषाय ते नमः ॥
अनेन विधिना कृत्वा सप्तरात्रं महोत्सवम् ॥
देवकुम्भैस्ततः कुर्याद्यजमानोऽभिषेचनम् ॥
चतुर्भिरष्टभिर्वाऽपि द्वाभ्यामेकेन वा पुनः ॥
सपञ्चरत्नकलशैः सितवस्त्राभिवेष्टितैः ॥
देवस्य त्वेति मन्त्रेण साम्ना चाऽथर्वणेन च ॥
अभिषेके च ये मन्त्रा नवग्रहमखे स्मृताः ॥
सिताम्बरधरः स्नात्वा देवान्सम्पूज्य यत्नतः ॥
स्थापकं पूजयेद्भक्त्या वस्त्रालङ्कारभूषणैः ॥
यज्ञभाण्डानि सर्वाणि मण्डपोपस्कारादिकम् ॥
[4]यच्चास्य दयितं गेहे तदाचार्याय दापयेत् ॥
सुप्रसन्ने गुरौ यस्मात्तृप्यन्ते सर्वदेवताः ॥

१ मया निवेदितान् मन्त्रान् प्रतिगृह्य विनिर्मिताम्—क　२ विलिप्यताम्—मु. म. पु.
३ These Three lines are supplied by क and मु. म. पु, २६७, २५-२७
४ यच्चान्यदपि तद्गेहे—मु. म. पु. २६७, ३२

नैतद्व्रिशीलेन न [1]दाम्भिकेन न लिङ्गिना स्थापन[2]मत्र कार्यम् ॥
विप्रेण कार्यं श्रुतिपारगेण गृहस्थधर्माभिरतेन नित्यम् ॥
पाषण्डिनं यस्तु करोति [3]बुध्या विहाय विप्रान् श्रुतिधर्मयुक्तान् ॥
गुरुं प्रतिष्ठादिषु तत्र नूनं कुलक्षयः स्यादचिराद[4]पूजकः ॥
स्थानं पिशाचैः परिगृह्यते वा अपूज्यतां यात्यचिरेण लोके ॥
विप्रैः कृतं यच्छुभदं कुले स्यात्प्रपूज्यतां याति चिरं च कालम्[5] ॥

---

१ दंभि°–क. २ °मन्त्रका°–क. ३ भक्त्या–इति मु. म. पु, २६७, ३४ ४ °पूज्यं–क; °पूज्यः–मु. पु. ५ मत्स्यपुराणे २६७ अध्यायस्समाप्तः ।

# अथ सूर्यप्रतिष्ठा ॥ १० ॥

[ तत्र ] **भविष्यपुराणे** [ १, १३४ ]

[1]साधयित्वा तु वै भूमिं तुषकेशविवर्जिताम् ॥
वालुकाङ्गारपाषाणा अस्थिहीनां [2]विशेषतः ॥
चतुर्हस्तसमायुक्ता वेदी विस्तरतो [3]भवेत् ॥
मण्डपस्तु प्रमाणेन दशहस्तः समंततः ॥
मण्डलं [4]चन्द्रशालाभिः कारयेद्विधिपूर्वकम् ॥
[5]सोऽब्धिजस्य समा लोकाल्लभते नात्र संशयः ॥
'चन्द्रशाला' शिरोगृहम् ॥ 'अब्धिज'श्चन्द्रः ॥
नदीसङ्गमतीरोत्थां [6]वालुकां तत्र कारयेत् ॥
उपलिप्य ततो भूमिं कारयेत्कुण्डमुत्तमम् ॥
चतुरस्रं श्रियायुक्तं पूर्वेकुण्डं तु कारयेत् ॥
दक्षिणे चाऽर्धचन्द्रं स्याद्वारुण्यां दिशि वर्तुलम् ॥
पद्माकारं तु वै कुर्यादुत्तरेण विचक्षणः ॥
तोरणानि ततः कुर्यात्पञ्चहस्तानि सुव्रतः ॥
न्यग्रोधोदुम्बरश्चैव बिल्वः पालाश एव च ॥
अश्वत्थश्च शमी चैव चन्दनः [7]प्लक्ष एव च ॥
[8]शुक्लवस्त्रोपगूढानि दशचीरान्वितानि च ॥

---

१ शोधयित्वा for साधयित्वा–मु. पु., १३४, ४ २ विशोध्य तु–मु. पु. ३ रवेः–इति मु. पु. पृ. ११८ ४ वृक्षशाखाभिः–मु. पु., १३४, ६ ५ सो नोजस्य–स; तस्मान्महत्फलं तस्य लभते नात्र संशयः–क, This line not found in printed भ. पु. ६ मृत्तिकां च समानयेत्–मु. पु. ७ श्चेति कीर्तिताः–मु. पु. ८ शुक्लवस्त्रसमायुक्ताःचित्रपट्टसमन्विताः–मु. पु.

[1]सालान्वितानि सर्वाणि तोरणानि विचक्षणः ॥
[2]'अग्निमीळे'ति मन्त्रेण दद्याद्वै पूर्वतोरणम् ॥
'इषेत्वोर्जे'ति मन्त्रेण यजे[3]द्दक्षिणतोरणम् ॥
'अग्न आयाहि' मन्त्रेण पश्चिमं तु [4]प्रकल्पयेत् ॥
'शं नो देवी'ति मन्त्रेण [5]दद्यादुत्तरतोरणम् ॥
कलशांस्तु समादाय हेमगर्भसमन्वितान् ॥
श्वेतचन्दनपङ्केन कण्ठे स्वस्तिकभूषितान् ॥
यवशालि [6]शरावैस्तु वस्त्रालङ्कारविग्रहान् ॥
'आजिघ्रे'ति च मन्त्रेण कलशांस्तु निवेशयेत ॥
दुकूलैश्चित्रपट्टैश्च वेष्टयेत्स्तम्भमालिकाम् ॥
[7]ध्वजछत्रपताकाभिश्चामरैस्तु वितानकैः ॥
शङ्खघण्टानिनादैश्च [8]गेयं मङ्गलवाचनैः ॥
तूर्यभेरीनिनादैश्च वेदध्वनिसमन्वितैः ॥
[9]पुण्याहजयशब्दैश्च कारये[10]त्तन्महोत्सवम् ॥
पताकाभिर्विचित्राभिर्ध्वजमालोपशोभितम् ॥
[11]विचित्रस्रग्विता[12]नस्थं प्रकीर्णकुसुमो[13]त्तरम् ॥
तन्मध्ये तु कुशांस्तीर्य देवार्चां स्थापयेद्बुधः ॥
पताकां पीतवर्णां च [14]पूर्वेणेन्द्राय दापयेत् ॥
आग्नेय्यां रक्तवर्णां[15] च याम्यां च [16]यमसन्निभाम् ॥
नीलाञ्जनसमप्रख्यां नैर्ऋत्यां च प्रदापयेत् ॥

---

१ जलमालान्वितः कुर्यात्–मु. पु. २ आशुसीलेति–क. ३ तोरणदक्षिणं–क. ४ समर्चयेत्–मु. पु. ५ यजेदुत्तरलोरणम्–मु. पु. ६ षरावैस्तु वर्णलक्ष्मीरविग्रहान्–क; शरावाद्य–मु. पु. ७ ध्वजादर्श°–मु. पु. ८ गेयमङ्गल–स. ९ पुष्पैश्च–मु. पु. १० °च्च म°–क. ११ विचित्रसानुमानाद्यं–क. १२ °नाद्यं–मु.पु. १३ °त्करम्–ने. १४ °र्वे शकाय–क. १५ °भा–क; °र्णाभां, कृष्णवर्णां यमाय च–मु. पु. १६ द्रु सर–क.

वारुण्यां सितव[1]स्त्राभां कृष्णां वायव्यगोचरे ॥
हरितां यक्षराजाय ईशान्यां [2]सर्ववर्णिकाम् ॥
श्वेतरक्तेन [3]वर्णेन वेदीमालिख्य यत्नतः ॥
वैद्यावेदीति मन्त्रेण वेद्या आलभनं भवेत् ॥
पूर्वाग्रानुत्तराग्रांश्च कुशानास्तीर्य यत्नतः ॥
'योगेयोगे'ति मन्त्रेण कुशैरास्तरणं भवेत् ॥
शय्या तत्रैव कर्तव्या [4]दिव्यास्तरणसंयुता ॥
गडुके द्वे विचित्रे तु तन्मध्ये स्थापयेद्बुधः ॥
दीपमालां विचित्रां च भक्ष्यभोज्यान्नपानकान् ॥
अपूपांश्च विचित्रां वै मोदकांश्च प्रदापयेत् ॥
पायसं कृशरं चैव दध्योदनसमन्वितम् ॥
[5]अश्विजांशुसमप्रख्यं शुभं छत्रं च विन्यसेत् ॥

## [6][ नारद उवाच ]

अतःपरं प्रवक्ष्यामि स्नानकर्मविधिं तव ॥
स्थापकस्तु महाप्राज्ञो ब्राह्मणो वेदपारगः ॥
अभिज्ञः [7]सर्वशास्त्राणामारुणेयश्च सुव्रतः ॥
भोजको भोजकैश्चान्यैर्ब्राह्मणैश्च [8]यथाविधि ॥
[9]दिशाभागे मण्टपस्य ऐशाने वा यथाक्रमम् ॥
हस्तमात्रप्रमाणं तु भद्रपीठं तु विन्यसेत् ॥
हस्तिना शकटेनापि भक्त्या ब्रह्मरथेन वा ॥
मङ्गलैर्ब्रह्म[10]सूत्रैश्च देवं प्रासादमानयेत् ॥

---

१ °र्णा°–क; र्णां च–मु. पु. २ सार्व°–स. ३ चूर्णेन–मु. पु. ४ दद्यात्तरणसंस्कृता–क. ५ अंशिजांगं समं चैवं–क. ६ I, 135–अध्यायारम्भः ७ शैव–ने; सौर–मु. पु. ८ तथा वृतः–मु. पु. ९ दिशो भागे मण्डपस्य–क; दिशाभागे मण्डलस्य–मु. पु. १० °घोषैश्च–मु. मु.

भद्रपीठं समादाय 'भद्रंकर्णे'ति [1]मन्त्रितम् ॥
सूत्रधारस्ततः प्राज्ञः शुक्लाम्बरधरः शुचिः ॥
स्नापयेत्कलशं गृह्य देवदेवं विभावसुम् ॥
सामुद्रं तोयमाहृत्य जाह्नव्यं यामुनं तथा ॥
सारस्वतं जलं पुण्यं चान्द्रभागं[2] च नार्म[3]दम् ॥
पुष्करस्य जलं गृह्य गिरिप्रस्रवणोदकम् ॥
अन्यद्वा शुचियत्तोयं नदीनदतडागजम् ॥
यथाशक्ति समाहृत्य कलशैः काञ्चनादिभिः ॥
[4]भोजकाष्टावष्टभिस्तु कलशैः स्नापयन्ति च ॥
ततस्तु मणिरत्नानि सर्वबीजौषधानि च ॥
सुगन्धानि च माल्यानि स्थलजान्यम्बुजानि च ॥
चन्दनानि च मुख्यानि गन्धाश्च विविधास्तथा ॥
ब्राह्मी सुवर्चला मुस्ता विष्णुक्रान्ता शतावरी ॥
दूर्वा च शङ्खपुष्पी च प्रियङ्गु रजनीवचा ॥
संहृत्य [5]तांश्च संभारान् स्नानकर्मविधानवित् ॥
[6]वटाश्वत्थशिरीषाणां पल्लवैः[7] कुसुमान्वितैः ॥
कलशोपरि विन्यस्तै[8]र्देयं स्नानोदकं रवेः ॥
काञ्चनैराजतैस्ताम्रैर्मृण्मयैः कलशैस्तथा ॥
साक्षतैः सहिरण्यैश्च सर्वौषधिसमन्वितैः ॥
गायत्र्या परिपूतैस्तैः [9]सोदकैः स्नापयेद्रविम् ॥
कुशोत्तरां ततः कृत्वा वेदीं पक्वेष्टकामयीम् ॥

---

१ मन्त्रितः–मु. पु. २ °गसनर्मदं–क; °गं च नार्मदम्–स. ३ °दम्–ने; ससैन्धवं–मु. पु. ४ भोजकाश्चाष्टभिस्सूर्यं कलशैः स्नापयन्ति हि–मु.पु. ५ °तान् सुसंभारान्–क. ६ घंटाश्वत्थ°–क; पलाश्वत्थ°–मु. पु. ७ कुशसंयुतैः–मु. पु. ८ °दद्यादर्घ्यं रवेस्सदा–मु. पु. ९ षोडशैः–मु. पु.

तस्यां वेद्यां समारोप्य परिधाप्य च वाससी ॥

प्रतिमामभिषिञ्चेत सोपवासः प्रयत्नतः ॥

[1]मूर्ध्नि सर्वौषधिं दत्त्वा तथैवामलकानि च ॥

मन्त्रेण[2] मृत्तिकां चापि मन्त्रतश्च जलं तथा ॥

[3]त्वं देवी वन्दिता देवैः सकलैर्दैत्यदानवैः ॥

तेन त्वं स्थापिता [4]मूर्ध्नि मया देवस्य शुद्धये ॥

[5]आदिस्त्वं सर्वभूतानां देवतानां च [6]सर्वशः ॥

रसानां पतये तुभ्य[7]माह्वानं हि कृतं मया ॥

इत्थं पौराणिकैर्मन्त्रैर्वैदिकैश्च विशेषतः ॥

कार्यं हि वारुणं स्नानं देवस्य यदुनन्दन ॥

[8]इदमुच्चार[9]येन्वाक्यं कुर्यात्स्नानं विचक्षणः ॥

[10]देवस्त्वामभिषिञ्चन्तु ब्रह्मविष्णुशिवादयः ॥

व्योमगङ्गाम्बुपूर्णेन [11]कलशेन सुरोत्तमम् ॥

[12]मरुतश्चाभिषिञ्चन्तु [13]भुक्तिमन्तो दिवस्पतिम् ॥

मेघतोया[14]भिपूर्णेन द्वितीयकलशेन तु ॥

सारस्वते[15]न तोयेन पूर्णेन सुरसत्तमाः ॥

विद्याधरा भिषिञ्च[16]न्तु तृतीयकलशेन तु ॥

---

१ अतः सर्वौषधिं गत्वा तथैषामलकानि च–क. २ वर्तिका वापि–क. ३ मन्त्र–त्वं मृदे–क; त्वं मृदे–इति मूलमातृका–मु. पु. ४ मूर्ति–क. ५ आपस्त्वं–क. ६ सर्वथा–मु.पु. ७ °सर्वेषां हि कृतं मम–क. ८ इमामु°-क. ९ °येद्वायं–क. १० देवास्त्वा–क, ने, स. ११ द्वितीयकलशेन तु–मु. पु. १२ 'मरुत–कलशेन तु' इत्ययं श्लोकः मुद्रितपुराणे न दृश्यते १३ भक्तिमन्तो–क., ने. १४ °तिपू°–क. १५ °तस्य पूर्णेन कलशेन सुरोत्तमम्–क. १६ °तु ऋषयः सप्तखेचराः–क.

शक्राद्याश्चाभिषिञ्चन्तु [1]ऋषयः सप्तखे[2]चराः ॥
वसवश्चाभिषिञ्चन्तु कलशेनाष्टमेन [3]च ॥
अष्टमङ्गलयुक्तेन देवदेव नमोऽस्तु ते ॥
ततो वै कलशैर्दिव्यैः स्नानकर्मसमारभेत् ॥
समुद्रं गच्छ यत्प्रोक्तं मन्त्रमेत[4]मुदीरयेत् ॥
[5]'समुद्रज्येष्ठे'ति मन्त्रेण क्षालयेन्मृत्तिकान्वितम् ॥
'सिनीवाली'ति मन्त्रेण दद्याद्वल्मीकमृत्तिकाम् ॥
शम्योदुम्बरमश्वत्थं न्यग्रोधं च पलाशकम् ॥
'य[6]ज्ञंयज्ञे'तिमन्त्रेण दद्यात्पञ्चकषायि[7]कम् ॥
पञ्चगव्यं पवित्रं तु आहरेत्ताम्रभाजने ॥
'गायत्र्या' चैव गोमूत्रं 'गन्धद्वारे'ति[8] गोमयम् ॥

---

१ लोकपालास्सुरोत्तमाः –मु. पु. ।
लोकपालाः समागताः ।
सागरोदकपूर्णेन चतुर्थकलशेन तु ॥
सर्वतीर्थाम्बुपूर्णेन पद्मरेणुसुगन्धिना ।
सप्तमेनाभिषिञ्चन्तु ऋषयः सप्तखेचराः ॥
वसनश्चाभिषिञ्चन्तु–स.

२ °चराः । नागास्त्वां कतमेन तु । हेमवद्धेमकूटाद्या...भिसिञ्चन्तु वाचलः ।
नैऋतोदकपूर्णेन षष्ठेन कलशेन तु ॥
सर्वतीर्थाम्बुपूर्णेन पद्मबिल्वसुगन्धिना ॥
वसवश्चाभि–क.

३ वै–क. ४ °वमुदीरयन्–क.

५ इमं गंगेति यत्प्रोक्तं मन्त्रमेवमुदीरयेत् समुद्र–क. ६ °ज्ञो°–क; ज्ञं°–मु. पु.

७ कम् ।
श्यवमादिविधिर्मुक्तं पञ्चगव्यं प्रकीर्तितम् ।
या ओषधीति मन्त्रेण स्नानमोषधिभिस्मृतम् ।
द्रुपदादिभिः पुनस्तस्य कुर्याच्चोद्वर्तनं बुधः ।
शिरस्नानं ततो दद्यात् मानस्तोकाभिमन्त्रितम् ॥
पञ्चगव्यं पवित्रं तु–क.

८ च–क.

'आप्यायस्वे'ति च क्षीरं 'दधिक्राव्णे'[1] दधिस्मृतम् ॥

'तेजोऽसि शुक्र'मि[2]त्युक्तं 'देवस्यत्वा'त्कुशो[3]दकम् ॥

एवमादि विधियुक्तं पञ्चगव्यं प्रकीर्तितम् ॥

'या औषधी'ति मन्त्रेण स्नानमोषधिभिः स्मृतम् ॥

'द्रुपदादि' पुनस्तस्य कुर्याच्चोद्वर्तनं बुधः ॥

शिरस्नानं ततो दद्यान्मानस्तोकाभिमन्त्रितम् ॥

[4][ पञ्चगव्यं पवित्रं तु आहरेत्तत्र योजयेत् ॥

'गायत्र्या' चैव गोमूत्रं 'गन्धद्वारे'ति गोमयम् ॥

'आप्यायस्वे'ति च क्षीरं 'दधिक्राव्णे'ति वै दधि ॥

'तेजोऽसि शुक्र'मित्याज्यं 'देवस्यत्वा'त्कुशोदकम् ॥ ]

'विष्णोरराट' मन्त्रेण दद्याद्गन्धोद[5]कं शुभम् ॥

[6]ततो नद्युदकेनैवं क्षालये[7]च्छुद्धवारिणा ॥

'जातवेदस'मुच्चार्य वस्त्रपूतेन वारिणा ॥

तत आवाहयेद्देवं रक्तमाल्याम्बरं शुभम् ॥

एह्येहि भगवान्भानो लोकानुग्रहकारक ॥

यज्ञभागं [8]गृहाण त्वं अर्कदेव नमोऽस्तु ते ॥

हिरणमयेन पात्रेण [9]अर्घपात्रं प्रदापयेत् ॥

'इदं विष्णुर्विचक्रमे'मन्त्रेणार्घं प्रदापयेत् ॥

पार्थिवैः कलशैः पूर्वं स्नापयेद्भास्करं बुधः ॥

[10]ततस्त्वौदुम्बरैर्वीर[11] राजतैस्तदनन्तरम् ॥

'औदुम्बरैः' ताम्रमयैः ॥

---

१ °व्णेति वै दधि–क. २ त्याज्यं–क.; तेजोऽसीति घृतं तद्वत्–मु. पु. ३ °दकम् । विष्णोरराटमन्त्रेण–क. ४ [ ] कोष्टान्तर्गतभागः–मु. पु. न दृश्यते. ५ °दके–ने. ६ ततोन्यदुदकेनैव–क. ७ °निर्मलेन तु–क. ७ गृहाणार्घं–मु. पु. ९ अर्घं पाद्यं प्र°–क; देवायार्घ्यं प्रदापयेत्–मु. पु. १० ततश्चौदुम्बरै–क. ११ °रैः–क.

ततस्तु काञ्चनैर्देवं स्नापयेद्यदुनन्द[1]नम् ॥
सर्वतीर्थजलैर्युक्तं सर्वौषधिसमन्वितम् ॥
शङ्खमादाय देवस्य ततो मूर्द्धनि [2]संकिरेत् ॥
दत्त्वा पुष्पाणि देवस्य मूर्ध्नि यत्नाद्विचक्षणः ॥
धूप[3]मुत्क्षिप्य यत्नेन ततः [4]स्नापनमाचरेत् ॥
प्रथमं स्नापयेद्देवं वारिणा यदुनन्दनम् ॥
ततस्तु पयसा राजन् पायसेन ततस्तु [5]तम् ॥
घृतेन मधुना चापि [6]ततश्चेक्षुरसेन च ॥
अग्निष्टोमस्य यज्ञस्य गो[7]सवस्य च सुव्रत ॥
ज्योतिष्टोमस्य राजेन्द्र वाजपेयस्य वा विभो ॥
राजसूयाश्वमेधाभ्यां घृताद्यैर्लभते फलम् ॥
यस्तु कारयते स्नानं यस्तु भक्त्या प्रपश्यति ।
स्नाने तु यत्नतः कार्यं देवदेवस्य सुव्रत ॥
यथा न [8]लङ्घयेत्कश्चिद्देवस्य स्नपनं विभो ॥
[9]न प्राश्नन्ति यथा काका[10]श्वानो वा लोकगर्हिताः ॥
स्नपयित्वा क्रमेणे[11]त्थं स्नानकर्मविधानवित् ॥
ततो वर्द्धनिकां गृह्य वारिधाराः समुत्सृजेत् ॥
तिस्रस्तु पुरतोऽर्कस्य [12]'आचमस्वे'ति च ब्रुवन् ॥
'[13]वेदोऽसी'ति च मन्त्रेण उपवीतं प्रदापयेत् ॥

---

१ °दन–क, ने, मु. पु., स; २ शङ्करः-मु. पु. ३ °मुपोद्य–क. ४ स्नपन–ने, स, स्नपनमालमेत्–मु. पु. ५ वे–क. ६ तथैवेक्षुरसे–क. ७ गोमेधस्य च सुव्रत–मु. पु. ८ Gap in मु. पु., filled by क. ९ न चाश्नन्ति यथा काकाः–क. १० स्नानो लोकविगर्वितः–क. ११ °यं–क.; °स्तीर्थं–मु. पु. १२ वामतश्चेति च द्रवन्–क. १३ देवोसीति च मन्त्रेण–क.

'बृह[1]स्पते'ति मन्त्रेण वस्त्रयुग्मं प्रदापयेत् ॥

[2]यशः श्रियं प्रकुर्वाणः पुष्पमालां प्रदापयेत् ॥

'धूरसी'ति च मन्त्रेण धूपं दद्यात्सगुग्गुलम् ॥

'[3]समिद्धोञ्जन' मन्त्रेण अञ्जनं [4]च प्रदापयेत् ॥

'[5]युञ्जाने'ति च मन्त्रेण रोचनां तस्य दापयेत् ॥

[6]आरार्तिकं च वै कुर्याद्दीर्घायत्वाय वर्चसे ॥

स्नान[7]क्रम इदं प्रोक्तं भास्करस्य महात्मनः ॥

भोजका ब्राह्मणाश्चैव क्रियां कु[8]र्युर्महात्मनः ॥

[9]बह्वृचोऽथर्वणश्चैव छन्दोगोध्वर्युरेव च ॥

[10]स्थापकस्य च चिह्नानि ये [11]च मूर्तिधराः स्मृताः ॥

[12]तेषां प्रवक्ष्यामि [13]भेदो( भेदान् ? )शृणुष्वैकमनाः स्वयम् ॥

सम्पूर्णगात्रो मतिमान् शास्त्रज्ञः प्रियदर्शनः ॥

कुलीनः श्रद्दधानश्च आर्यदेशसमुद्भवः ॥

न स्थूल[14]कृशदीर्घाङ्गः सौरशास्त्रविधानवित् ॥

[15]शुद्धजन्माभियुक्तश्च गुरुभक्तो जितेन्द्रियः ॥

पञ्चविंशति तत्त्वज्ञः स्थापकः समुदाहृतः ॥

वर्जनीयांस्तु वक्ष्यामि यैस्तु कर्म न कारयेत् ॥

[16]हीनाङ्गश्चातिरिक्ताङ्गो वामनो विकटस्तथा ॥

नातिगौरो [17]नातिकृष्णः स्थापनाय प्रशस्यते ॥

---

१ °स्पतीति–क. २ येनाश्रियं–क; यत्नकमं प्रकुर्वाणः–मु. पु. ३ ससिद्धोऽञ्जन मन्त्रेण–स. ४ तु–क. ५ This line omitted in क. ६ आरात्रिकं–मु. पु., स. ७ °कर्म–मु. पु., स. ८ °युः प्रयत्नतः–क. ९ बहूतो पूर्वणश्चैव छन्दोगा धर्मरेव च–क.; बह्वृचोऽयर्वण–स. १० स्नापकस्य च–मु. पु. ११ येन–क. १२ येषां प्रवक्ष्यामि विभो शृणुष्वैकमनाः स्वयम्–स. १३ विभो शृप्रेक्षैकमनाशुभम्–क., विभो शृणुष्व–ने, स, मु. पु. १४ °लोनोच्चदीर्घाङ्गः–क. १५ स्नाद्धकर्माभियुक्तश्च–क. १६ दीनाङ्गश्चातिरिक्ताङ्गो–स., °गी–क. १७ न कृष्णश्च–क, मु. पु, स.

चार्वाको [1]याचकश्चैव नित्यं गोमुखदं[2]शकः ॥
अशुचिर्व्र[3]णसंयुक्तः श्यामदन्तोऽथ मत्सरी ॥
[4]रोगयुक्तोऽथ बालश्च युवा वा वृद्ध एव च ॥
[5]श्वित्री कुष्ठी च रोगी च काणो दुर्मतिरेव च ॥
सङ्कीर्णो जातिहीनश्च तथा च वृषलीपतिः ॥
[6]कुब्जान्धकश्च खल्वाटो व्यङ्गो वै विकलेन्द्रियः ॥
[7]अविनीतो दुरात्मा च विकलः पङ्गुरेव च ॥
तिथिनक्षत्रयोगानां वाराणां च तथा विभो ॥
सूचको जीविता[8]र्थं हि यश्च मूल्येन पाठयेत् ॥

**[ भविष्यपुराणे, १, १३६ ] —**

**[9]नारद उवाच —**

अतःपरं प्रवक्ष्यामि अधिवासनमुत्तमम् ॥
सहस्रशीर्षापुरुषो[10] मण्डपं यत्नतो विशेत् ॥
ततोऽन्यत्र शुचौ देशे सुसंमृष्टोपलेपने ॥
मण्डपं पञ्चवर्णैस्तु आ[11]लिखेच्चातुरस्रिकम् ॥
पताकातोरणच्छत्रध्वजमालाद्यलङ्कृतम् ॥
विचित्र[12]स्रग्वितानाढ्यं प्रकीर्णकुसुमोत्करम् ॥
तस्य मध्ये कुशास्ती[13]र्णा मूर्तिः[14]स्थाप्या विवस्वतः ॥

---

१ रंकजश्चैव ह्निन्द्याङ्गो मुखदंशकः–क; याजक°–मु. पु. २ °दम्भकः–मु. पु. ३ °णयुक्तश्च –क. ४ कोपनोदुष्टशीलश्च–मु. पु. ५ This line is omitted in क. ६ कुब्जश्चान्ध-स्तथारङ्गः षण्डाढोविकलेन्द्रियः–क. ७ अवटी चतुरालापो विकचः पङ्गुरेव च–क. ८ च–क; °तार्थे च–स. ९ I-136. अध्यायारम्भः। १० °ष मण्डपं मन्त्रतो विशेत्। सहस्रशीर्षेत्यादि सहस्रशीर्षा इत्यनेन मन्त्रेण मण्डपं प्रविशेदित्यन्वयः–क., एवमन्यत्रापीतिकरणरहितमन्त्रप्रतीकोरुचंजन्तु चः। अतोन्यस्मिन् शुचौ देशे–क. ११ °लिखेच्चातुरन्तिकम्। चातुरन्तिकम् चतुरस्रम्–क. १२ °सवितानाथम्–क; सुवितानाढ्यं–मु. पु. १३ °र्णे–मु. पु. २४ स्थाया विशेषतः–क.

ततोऽस्यावाहनं कृत्वा दद्यादर्घं प्रयत्नतः ॥

सुवर्णमधुपर्कादि सुमनोधूपदीपकैः ॥

देवस्य दर्शयेद्गां च सवत्सां रोहिणीं शुभाम् ॥

'रोहि[1]णी' लोहितव[2]र्णा ॥

नमो गोपतये[3]त्युक्त्वा सहस्रांशो प्रसीद मे ॥

[4]एवमर्घेण सम्पूज्य परि[5]धाय च वाससी ॥

यज्ञोपवीत[6]माबध्य बध्वा व्यङ्गं तथैव च ॥

वत्सरे वत्सरे तस्य नवमव्यङ्गमादिशेत् ॥

श्रावणे मासि राजेन्द्र पवित्रं [7]तस्य तद्बुधः ॥

ब्राह्मणान् भोजयित्वा तु वर्षे वर्षे [8]प्रयोजयेत् ॥

अव्यङ्गं यदुशार्दूल श्रावणे मासि भास्करे ॥

'[9]अव्यङ्गं' व्रतकाण्डस्य कृत्ये व्याख्यातम् ॥

सर्वगन्धैः समालभ्य चन्दनागुरुकुङ्कुमैः ॥

अलङ्कारैरलङ्कृत्वा कुसुमैश्च सुगन्धिभिः ॥

मालाभिश्च विचित्राभिराबद्धाभिरनेकशः ॥

ततो धूपं निवेद्याशु [10]प्रतिमायै प्रयत्नतः ॥

सहस्रशीर्षा पुरुषो[11] मण्डलं [12]तं प्रवेशयेत् ॥

'[13]शं भवाये'ति मन्त्रेण शय्यायां विनिवेशयेत् ॥

'विश्वतश्चक्षु'रित्येवं कुर्यात्सकल[14]निष्कलम् ॥

पुनरेव प्रवक्ष्यामि [15]शकलीकरणं शुभम् ॥

---

१ °र्णी–क. २ °र्णा–क. ३ °तुभ्यं–मु. पु. ४ एवमर्वेण–स. ५ °धाप्य च–क, ने, स. ६ °मातिथ्यं तथाभ्यंगं तथैव च–मु. पु. ७ तद्व्रितं बुधः–क; तस्य तद्वचः–ने. ८ प्रपूजयेत्–क. ९ अर्चा...व्रतकाण्डैर्वा व्याख्यातम्–क. १० प्रतिमायै–स. ११ °षं मण्डपे तु प्रवे°–क; °मण्डपं च–मु. पु. १२ तु–ने, स. १३ नमश्शंभ°–मु. पु. १४ °निष्फलम्–क. १५ संकलीं°–मु. पु.; सकली–स.

[1]स्थापकेन सदा कार्यं स्वदेहन्यासमुत्तमम् ॥
प्रतिमायां तथा कुर्यात्तथा चालम्भनं बुधः ॥
[2]'ॐ हं खं ख खोल्काय नमः' मूलमन्त्रं प्रकीर्तयेत् ॥
[3]आदित्योऽयं स्वयं देवस्त्र्यक्षरेणोपबृंहितः ॥
ओङ्कारं विन्यसेन्मूर्ध्नि हंकारं नासकोपरि ॥
[4]वकारं च ललाटे तु [5]खकारं वदने न्यसेत् ॥
[6]ॐकारं चैव कण्ठे तु [7]लकारं हृदये न्यसेत् ॥
यकारं तु भुजे वामे नकारं दक्षिणे [8]भुजे ॥
मकारं वामकुक्षौ तु [9]नकारं दक्षिणेन तु ॥
[10]नकारं वामपदे तु मकारं दक्षिणे न्यसेत् ॥
ॐकारं तु सदा ध्यायेज्ज्वालामालासमाकुलम् ॥
[11]हकारं शुद्धवर्णाभं प्रस्रवन्तं जलं शुभम् ॥
[12]खकारं चिन्तयेत्प्राज्ञो भिन्नाञ्जनसमप्रभम् ॥
तरुणादित्य[13]वरुणाभं खकारं चिन्तयेद्बुधः ॥
[14]खोकारं तु महाबाहो हेमवर्णं विचिन्तयेत् ॥
शुक्लपद्मनिभाकारं [15]अकारं चिन्तयेद्बुधः ॥
जातीकुसुमसङ्काशं [16]यकारं चिन्तयेद्बुधः ॥
नकारं हिमकुन्दाभं मकारममृताक्षरम् ॥

---

१ स्नापने तु–मु. पु. २ ओं हं खं खः स्काय नमः–भूतमन्त्रः प्रकीर्तितः–क.; ओं खषोल्कालनमो मूलमन्त्रः प्रकीर्तितः–मु. पु. ३ आदित्याहि स्वयं देवस्त्र्यक्षेणोप°–क. ४ हकारं च–क.; खकारं–मु. पु., स. ५ मकारं–क., षकारं–मु. पु. ६ खोकारं चैव कर्णेतु–क., लकारं–मु. पु; उकारं–स. ७ ऋकारं हृदयेन तु–क., खकारं–ने; स.; ककारं–मु. पु. ८ करे–क. ९ हुंकारं दक्षिणे न्यसेत्–क, हकारं–मु. पु. १० This line omitted in क., मु. पु. ११ हुं कारं–मु. पु. १२ खं कारं–क. १३ °वर्णान्तं भं ?–स. १४ षोकारं तु–मु. पु. १५ मः कारं–क; मकारममृताक्षरम्–मु. पु.; सकारं–स. १६ ह्रीं कारं सर्ववर्णकम् । क्षीरवर्णं सकारं तु–मु. पु.

ह्रींकारं विद्युत्सङ्काशं ह्रुकारं पीत[1]वर्णकम् ॥
क्षीरवर्णं सकारं तु चिन्तयेत्सततं बुधः ॥
नकारं [2]तरुणाभं तु [3]मकारं कनकप्रभम् ॥
ततो देवं महात्मानं सहस्रकिरणं रविम् ॥
प्रसादाभिमुखं देवं शयनीये निवेशयेत् ॥
[4]अग्निकार्यं ततः कुर्युरग्नि[5]काण्डेषु वै द्विजाः ॥
[6]ततो रथात्समुत्थाप्य [7]भगः सौरादयोऽपि वा ॥
[8]प्रज्वाल्य च विधानेन कुर्युर्होमं विचक्षणाः ॥
बह्वृचः पूर्वकुण्डे तु [9]याम्ये वाजसनेयकः ॥
पश्चिमे साम[10]वेदस्तु उत्तरेऽथर्वणो मतः ॥
मध्ये तु भोजकः कुर्याद्धोमं प्रा[11]ज्ञो यदूत्तम ॥
[12]पालाशो दुम्बरशमी अपामार्गस्तथैव च ॥
द्वादशैव सहस्राणि अष्टौ चत्वारि [13]पञ्च वा ॥
[14]द्वे त्रीणि च सहस्राणि अथवा[15]प्येकमेव हि ॥
'अग्निर्मूर्द्धे'ति मन्त्रेण [16]कुण्डस्यालम्भनं भवेत् ॥
उल्लेखाभ्युक्षणे चैव 'अ[17]ग्निदूत'मिति स्मृते ॥
'सप्तमे[18] अग्न' इति मन्त्रेण गर्भाधानं तु कारयेत् ॥
'[19]सीमन्ते'ति सहस्रं तु महामन्त्रेण होमयेत् ॥

---

१ °काण्डकम्–क; प्रोतकर्णकम्–ने; ह्रांकारं प्रीतकर्णकम्–स. २ हिमकुन्दाभं–मु. पु. ३ अकारं–मु. पु. ४ अग्निकार्यं ततः कुर्याद्वह्निकुण्डेषु वै द्विजाः–क ५ °कुण्डेषु–ने, मु. पु., स. ६ ततोरन्यं समुत्थाप्य मणेस्सौरादथापि वा–क; ततोऽरण्यां–मु. पु. ७ भगीस्सौरा–ने; मगाः–स. ८ प्रज्वाल्याग्निं प्रयत्नेन कुर्युर्होमं विचक्षणाः–क. ९ याम्यां मध्यन्दिनस्तथा–मु. पु. १० °देवस्तु–क. ११ °ज्ञे–क. १२ शमीपालाशोदुम्बर्या–मु. पु. १३ एव च for पञ्च वा–मु. पु. १४ द्वित्रीणि च–क. १५ °वा एक–क, स. १६ कुम्भस्यालं°–क; कुंडस्यालं°–ने, मु. पु., स. १७ °ग्निं दूतमिति स्मृतः–क; अग्निं–ने, स. १८ °ते अग्नेति–क; सबुध्यग्निं च मन्त्रेण–मु. पु. १९ सीमंतीभि पूतः तत्र महा–क.; सीमन्तसंन्तीति ? महा–स.

जातकर्म तथा प्रोक्तं [१]प्राणायेति विदुर्बुधाः ॥
'नमः स्वाहे'ति मन्त्रेण नामकर्मणि होमयेत् ॥
'[२]ब्रह्मयज्ञे'ति मन्त्रेण निःक्रमं [३]होमयेत्पुनः ॥
'अन्नप्राशन'मन्त्रेण अन्नप्राशनमादिशेत् ॥
'अन्नप्राशनमन्त्रेण' अन्नपते[४]ऽन्नस्येत्यनेन ॥
'[५]ज्येष्ठ यज्ञे'ति मन्त्रेण [६]तथा चूलोपकर्मणि ॥
व्रतबन्ध[७]स्य मन्त्रेण व्रतबन्धं समा[८]चरेत् ॥
[९]समावर्तनमित्येव 'आकृष्णे'ति च होमयेत् ॥
पत्नी संयोजने[१०]चैव त्र्यम्बकं च प्रकल्पयेत् ॥
अग्निहोत्रादिकं कर्म यज्ञकर्माणि यानि च ॥
'महाव्याहृति'मन्त्रेण होतव्यानि समन्ततः ॥
मातॄणां यज्ञभूतानां बलिकर्म प्रदापयेत् ॥
सर्वकामसमृद्ध्यर्थं कारयेदधिवासनम् ॥
त्रिरात्रं पञ्चरात्रं वा अहोरात्रमथापि वा ॥
ततस्त्वलङ्कृतां स्नातां मणिरत्नैर्विभूषिताम् ॥
कृत रक्षां तु यत्नेन प्रतिमामधिवासयेत् ॥
देवागारादथेशाने दिग्भागे [११]दिव्यसंज्ञिते ॥
[१२]कुशैरुपरि संस्तीर्णे वरास्तरणसंवृते ॥
पूर्वशीर्षां तथा शय्यां शुक्लां शुक्लाम्बरोत्तराम् ॥
[१३]शय्यामावेशयेत्सम्यक् महाश्वेतामुदा[१४]हरन् ॥
निकुम्भो दक्षिणे पार्श्वे वामे [१५]राज्ञि प्रकीर्तिता ॥

---

१ प्राणायामं–मु. पु. २ ब्रह्म जज्ञेति मन्त्रेण–स. ३ तत्र कारयेत्–स. ४ °ते अन्नस्येति–अनेन–क. ५ ज्येष्ठमग्रेति–मु. पु. ६ नवचूडो°–क. ७ °न मं–क. ८ °दिशेत्–क. ९ समावर्तन–मन्त्रेण–क. १० °नं चै°–क. ११ दिव्यमन्दिरम्–मु. पु. १२ कृत्वा कुशपरिस्तीर्णे–क. १३ तस्यामा°–क. १४ हरेत्–क.; °मुपाहरेत्–मु. पु. १५ राज्ञी–स.

[1]दण्डिनौ तु गणौ चास्य स्थितौ पादप्रदेशतः ॥
[2]तस्यां तु वै शितायां तु शर्वर्यां प्रतिमा रवेः ॥
वसे[3]तां रजनीं तत्र स्तूयमानश्चतुर्दिशम् ॥
ब्राह्मणै[4]र्वह्निभिश्चापि गीतज्ञैश्चारणैस्तथा ॥
कुर्याज्जागरणं तत्र सूर्य[5]भक्तिसमन्वितः ॥
प्रभातायां तु शर्वर्य्यां बोधयेत विधानतः ॥
हविष्यं भोजयित्वा तु ब्राह्मणान्भोजकांस्तथा ॥
दक्षिणाभिश्च संपूज्य तैः कृते स्वस्तिवाचने ॥
ततो गर्भगृहस्याथ मध्ये कृत्वाथ पिण्डिकाम् ॥
[6]अवटैश्चास्य सौवर्णं न्यसेत्सप्तहयं रथम् ॥
तत्र सर्वौषधीश्चैव [7]तथा दत्त्वा विधानवित् ॥
दत्त्वार्[8]घं स्थापयेत्तत्र यजमानः सहायवान् ॥
शङ्खदुन्दुभिनिर्घोषैर्जलधारं[8] सहाक्षतैः ॥
कृत्वा पुण्याह[9]शब्देन आलयस्य प्रदक्षिणम् ॥
[10]स्थापनं च शुभे लग्ने दिने ऋक्षे शुभे तिथौ ॥
मुहूर्ते च [11]शुभे भानोः प्रतिमां स्थापयेद्बुधः ॥
नाऽधोमुखीं नोर्द्ध्वमुखीं न पार्श्वावनतां तथा ॥
समानाभिमुखीं चेमां प्रतिमां च निवेशयेत् ॥
पत्न्यौ चास्य तथा सम्यक् पार्श्वयोश्च निवेशयेत् ॥
[12]नकुम्भो दक्षिणे पार्श्वे रवे राज्ञी तु चाग्रतः ॥

---

१ दण्डिपिङ्गलगौ चास्य–क, मु. पु. २ तस्यां सर्वोर्ध्वतायां तु सर्वस्यां प्रतिमादरैः–क.; तस्यां सर्वशितायां–मु. पु., स. ३ °तर–क; वसेत्तां–मु. पु. ४ °स्तुतिपादैश्च–क; °र्वन्दिभिः–मु. पु. ५ °र्यश्शक्तिसमन्वितैः–क. ६ विधिवत्तत्र–मु पु. ७ सर्वं दत्वा–क. ८ °रा स°–क., मु. पु.; °धारा स°–स. ९ °शब्दं च–क. १० शुभे लग्नयुतेध्यक्षे पूर्वाह्णे भानवेक्षणे–क. ११ शिवे–क. १२ विद्युभा–क; निकुम्भो–ने; निक्षुभा–मु. पु.

ततस्तैरूप[1]हारार्थं सम्भारैः प्राक्समाहृतैः ॥
मोदकोल्लापिकापूपशष्कुलीभूतशीर्षकैः ॥
कृशरापायसोन्मिश्रैः सर्वदिक्षु क्षिपेद्बलिम् ॥
इन्द्राय [2]पूर्वपतये बलिं ते वज्रपाणये ॥
शतयज्ञाधिपे तस्मै पूर्वइन्द्राय वै नमः ॥
'त्रातारमिन्द्र'मन्त्रेण इन्द्रस्याऽऽवाहनं भवेत् ॥
अग्नये रक्तनेत्राय ज्वालामालाचिताय वै ॥
शक्तिहस्ताय तीव्राय नमोऽ[3]स्तु कृष्णवर्त्मने ॥
'[4]अग्नये गाय[5]त्राये'ति वह्नेरावाहनं स्मृतम् ॥
दण्डहस्ताय कृष्णाय महिषध्वजवाहिने ॥
सूर्यपुत्राय देवाय धर्मराजाय वै नमः ॥
'[6]यमाय त्वा मखाय त्वा' मन्त्रस्तस्मै प्रकीर्तितः ॥
नैर्ऋत्यां खड्गहस्ताय नीललोचनकाय च ॥
सर्वरक्षोधिपतये विरूपाक्षाय ते नमः ॥
'आयङ्गौरी'ति मन्त्रेण नैर्ऋत्यां तु प्रकल्पयेत् ॥
वारुण्यां पाशहस्ताय [7]ऊषारूढस्थिताय च ॥
'[8]निम्नगापतये वीर वरुणाय च वै नमः ॥
मन्त्रेणावाहनं विद्यात्पञ्चनद्यः सरस्वती ॥
प्राणात्मकाय धूम्राय सर्वगायाऽनिलाय च ॥
ध्वजहस्ताय भीमाय [9]नमो गन्धवहाय च ॥
तस्याप्यावाहनं विद्याद्देवा देवहेडनम् ॥

---

१ °हाराद्यैः–क; °रूपहारार्थं–मु. पु., स. २ देव प°–क. ३ वै–क; तथा चैवाजवाहिने–मु. पु. ४ आग्नेय्यामग्निमन्त्रेण–मु पु. ५ °त्रियायेति–क. ६ यमायाङ्गिरसे मन्त्रः तस्मै–क. ७ वृषारूढशिवाय च–क; वरुणायेति कल्पयेत्–मु. पु.; ? ऊषरूढास्थिताय च–स. ८ विश्वगापतये वीर–क. ९ सोमराजाय वै नमः–क.

गदाहस्ताय सोमाय शुष्मिणे रथगाय च ॥
गदापट्टिशहस्ताय सोमराजाय वै नमः ॥
'आप्यायस्व समे तु ते'. सोममन्त्रः प्रकीर्तितः ॥
गणाधिपतये देव नीलकण्ठाय शूलिने ॥
विरूपाक्षाय रुद्राय त्रैलोक्याधिपतये नमः ॥
'अभि त्वा शूर नो नुमो' ईशानाय प्रकल्पयेत् ॥
सर्वनागाधिराजाय श्वेतवर्णाय भोगिने ॥
सहस्र[1]शीर्षाय नित्यमनन्ताय नमो नमः ॥
'नमोऽस्तु सर्पेभ्य' इति मन्त्र एषः प्रकीर्तितः ॥
चतुर्मुखाय देवाय पद्मासनगताय च ॥
कृष्णाजिन[2]धृताङ्गाय [3]स्रुचहस्ताय वै नमः ॥
'ब्रह्मजज्ञान'मित्यस्य मन्त्र एष उदाहृतः ॥
नमस्ते गजवक्त्राय सिद्धिबुद्धिप्रदाय च ॥
नमस्ते मोदकरुचे नमो लम्बोदराय च ॥
'गणानां त्वा गणपति'मिति म[4]न्त्रउदाहृतः ॥
पञ्चरत्नादि विन्यासं रत्नन्यासं प्रयोजयेत् ॥
तर्पयेत्क्षीरमध्वाजैः स्तुतिस्तोत्रैश्च भास्करम् ॥
विप्रेभ्यो भोजकेभ्यश्च ततो देया च दक्षिणा ॥
सूर्यक्रतुं महापुण्यं नैव कुर्या[5]च्च दक्षिणे ॥
[6]संस्थाप्य तेन विधिना तद्भक्तैः प्रतिमा तु या ॥
[7]साधुवृत्तिकरी नित्यं [8]शान्तिदा च सदा भवेत् ॥
चतुर्णामपि वर्णानां स्थापयेद्यस्तु भास्करम् ॥

---

१ °शिरसे–क, ने, स. २ °निषङ्गाय–क. ३ पद्महस्ताय ते–क. ४ °न्त्रमुदाहृतम्–क. ५ °ददक्षिणम्–क. ६ स्थाप्यतेनेन विधिना–क; स्थाप्यते तेन विधिना–ने, स. ७ साधुवृद्धिकरी नित्यं शान्तिदा च–स. ८ सान्निध्यं–क.

स तीर्णः सर्वसंसारात् [1]धनमालित्वमाप्नुयात् ॥

पश्यन्ति मानवा येऽपि आदित्यस्याधिवासनम् ॥

सप्तजन्मशतं तेषां न रोगाः सम्भवन्ति हि ॥

त्रिरात्रं येऽप्युपासन्ते भानो[2]र्यत्राधिवास[3]ने ॥

गन्धमाल्योपहारैश्च ते यान्ति भवनं रवेः ॥

आत्मीयं परकीयं वा प्रतिमास्थापनं रवेः ॥

यः पश्यति पुमान् भक्त्या स्वर्गलोकमवाप्नुयात् ॥

दशानामश्वमेधानां वाजपेयशतस्य च ॥

[4]फलं प्राप्नोति पुरुषः प्रतिष्ठाप्य दिवाकरम् ॥

यावत्कीर्तिः पुण्यवतो भानोः स्थाननिवे[5]शिनः ॥

तावत्स तु यदुश्रेष्ठ सूर्यलोके महीयते ॥

स्थापने चाऽस्य वै म[6]न्त्रः सम्प्रोक्तो लोकपूजितः ॥

ध्रुवा द्यौश्च ध्रुवा पृथ्वी ध्रुवं विश्वमिदं जगत् ॥

श्रेयसे यजमानस्य तथा त्वं ध्रुवतां व्रज ॥

स्थापयित्वा रविं भक्त्या विधिदृष्टेन कर्मणा ॥

मासि मासि क्रतुफलं लभते नात्र संश[7]यः ॥

एकाहेनापि यद्भानोः पूजया प्राप्यते फलम् ॥

न तत्क्रतुशतैर्वीर प्राप्यते [8]मानवो भुवि ॥[9]

---

१ बलिनो नयमा°–क. २ °र्यत्राधिवासने–स. ३ °नम्–क. ४ फलमाप्नो°–क. ५ °शनम्–क. ६ °न्त्रः प्रोक्तः लकेष्टपूजितः–क. ७ °यः अथ शिवप्रपिष्ठा–क. ८ मानवैर्भुवि–ने, स. ९ मु. पु. १, १३६, ७५

# अथ शिवप्रतिष्ठा ॥ ११ ॥

## [तत्र] भविष्यपुराणे—

### [नारद उवाच][1]

अतः परं प्रवक्ष्यामि अधिवासविधिक्रियाम् ॥
तिथिनक्षत्रयोगांश्च स्थापकस्य [2]तु लक्षणम् ॥
व्यसनी वामनः कुब्जः क्रोधनः कुनखी शठः ॥
चपलश्च खलश्चैव हीनाङ्गः सूचकः क्षयी ॥
व्याधितस्तार्किको राजन् मिथ्याचारः [3]शठोव्रती ॥
काकस्वरोऽल्पविद्यश्च मत्सरी समयच्युतः ॥
[4]अज्ञः साहसिको लुब्धः श्यामदन्तोऽजितेन्द्रियः ॥
गुरुदेवद्विजातीनां निन्दको वृषलीपतिः ॥
पिशुनो धान्यविक्रेता कृतघ्नः कामतत्परः ॥
पुण्याजीवी देवलकः कुण्डजो नास्तिको वृषः ॥
क्लीबः क्रूरः कृतघ्नश्च स्वधर्मपरिवार्जितः ॥
पुरोधाः सेवकश्चैव पण्यस्त्री परदारगः ॥
नोद्विग्नो न च [5]दीनात्मा नाशुचिर्नाप्यसंस्कृतः ॥
पुत्रको [6]वाऽपि येद्वेष्टा स्थापकान् परिवर्जयेत् ॥
प्रासादस्याग्रतः पूर्वमनघो धीमतां वरः ॥
प्रागुत्तरप्लवां मन्त्री भूमिं संशोध्य यत्नतः ॥

---

१ [मु. पु. पृ. १२०] २ च–क. ३ शठव्रती–क. ४ अक्षः–ने. ५ हीना°–क.
६ वापि विद्वेष्टा–स.

त्रिशद्धस्तं समं तत्र तथा विंशतिसंख्यया ॥
दशषोडशहस्तं वा मण्डपं कामतोऽपि वा ॥
विदिक्स्थैः स्तम्भविन्यासैः कारयेत् सुमनोहरम् ॥
कटैश्छादितदिग्भागं पताकाभिर्ध्वजै[1]रपि ॥
चतुर्हस्ता भवेद्वेदी चतुर्भिस्तोरणैर्युता ॥
उपलिप्या [2]कृतैस्तत्र शम्भोर्भवनमालिखेत् ॥
चतुरस्रं चतुर्द्वारं समसूत्रमनिन्दितम् ॥
तोयाक्षत[3]हिरण्याद्यैः कलशैरुपशोभितम् ॥
पूर्वेणेन्द्रायुधनिभा आग्नेयामग्निवर्चसा ॥
कृष्णा दक्षिणतो राजन् हरिता चैव नैर्ऋते ॥
वारुणे शिखिपिच्छाभा पीता चाऽनिलगोचरे ॥
उत्तरे गोपकनिभा पताका चेश्वरे हिता ॥
दण्डकैः पञ्चहस्ता तु दशहस्तान्ध्वजानपि ॥
चित्रविन्यस्तदिग्भागान्मध्ये [4]वेदीं प्रकल्पयेत् ॥
प्रदी[5]पदीपिकाभिश्च घण्टाभिश्चामरैस्तथा ॥
[6]चित्रैः पटवितानैश्च रत्नविच्छरिताम्बरैः ॥
विचित्रैर्रत्नविन्यासैरुज्वलैर्मनसःप्रियैः ॥
उज्वलद्भिश्च मणिभिः स्तम्भासक्तैश्च दर्पणैः ॥
हारैः प्रलम्बमानैश्च विद्रुमस्तबकैस्तथा ॥
फलस्तबकविन्यासैः पल्लवैश्च पृथग्विधैः ॥
स्रक्दामचामरै[?]छत्रैः समन्ताद्भवनं नृपः ॥

---

१ °रपि । चित्रविन्यस्तदिग्भागा–क. २ °क्षतैः–ने, स. ३ हिरण्याढ्य कलशै–स. ४ वेदीं–क. ५ °पैः–क. ६ विचित्रैः पट्टविताने°–क.

भूषयित्वा यथालाभं तत्रेशानं निवेशयेत् ॥
नीरां दर्भां समादाय गन्धोदकपरिप्लु[1]ताम् ॥
उदपा....प्रा........वेद्यामुपरि विन्यसेत् ॥
कर्णिकाया........लिङ्गप्रच्छादनपटान्वितम् ॥
सोपधानं शिवस्यैवं मन्त्रं स्मृत्वा नियोजयेत् ॥
पार्श्वतश्चाग्निकुण्डानि दिक्षु[2]क्रमविचक्षणः ॥
प्रकल्पयेद्यथोक्तानि चत्वार्येकमथाऽपि वा ॥
आचार्यान्मन्त्रतत्वज्ञानष्टौमूर्तिधरान् [3]शुभान् ॥
वरयेत् पुत्रकान्यापि तदभावे दृढव्रतान् ॥
प्रकल्प्यैवमनुद्विग्नः स्थापयेच्छिवमादितः ॥
[4]तस्य चैवोत्तरे पार्श्वे कर्तव्यं स्नानमण्डपम् ॥
सुशोभनं तु कर्तव्यं स्थण्डिलं वालुकामयम् ॥
ततस्तस्यापरे पार्श्वे कृत्वा स्थण्डिलमायतम् ॥
अक्षतैश्चतुरस्रं च स्वस्तिकान्तिकविग्रहम् ॥
चतुर्द्वारं लिखेन्मन्त्री चतुर्भिस्तोरणैर्युतम् ॥
सौवर्णं राजतं ताम्रं दारुजं कौशमेव च ॥
तस्य पीठं न्यसेन्मध्ये यथालाभमनिन्दितम् ॥
दध्यक्षतशमीपत्रफलाम्बुकुसुमादिभिः ॥
पात्राण्यष्टौ सुवर्णानि दि[5]क्ष्वष्टासु निवेशयेत् ॥
विन्यसेद्वैणवे पात्रे रक्तवस्त्रयुगं शुभम् ॥

---

१ °ताम् । परिप्लुताम्बरदग्धाश्च वेद्यासु परिधि न्यसेत् ।
कर्णिकायां ततः सूत्रैप्रच्छादनपटान्विताम् ॥
सोप°—क.

२ °स्वाग्निवि°—क. ३ शुचीन्—क. ४ तस्यैवोत्तरपार्श्वे तु कर्तव्यं स्थानमण्डनम्—क.
५ °क्षु तासु नि°—क.

आहरेत्पूर्णपात्रेण रोचनालक्तकैर्युतम् ॥
शरीरोद्वर्तनं राजन् यवगोधूमसम्भवम् ॥
माषपिष्टमयं वाऽपि गन्धं दिग्धमुपाहरेत् ॥
[1]जटामांस्युत्पलोपेतं देवस्यामलकान्यपि ॥
विलेपनं च विविधमाहरेत [2]जनाधिप ॥
कुसुमानि विचित्राणि रत्नान्याभरणानि च ॥
विविधानि च वस्त्राणि पूजार्थमुपकल्पयेत् ॥
स्त्रियश्चाविधवास्तत्र चतस्रः समलङ्कृताः ॥
आहरेद्ब्राह्मणकुलान् [3]मङ्गलानीरयन्ति याः ॥
अन्यांश्च वादकुशलान् गायनांश्च [4]तथाविधान् ॥
ऋक्पाठकांस्तथा विप्रानाहरेत नराधिप ॥
सर्वोपकरणान्येवं आहृत्य तदनन्तरम् ॥
गोमयेनापरं मन्त्री कृत्वा मण्डलकं पुनः ॥
तत्र लिङ्गं समानीय [5]सुधृतं सुपरीक्षितम् ॥
वल्मीकमृत्तिकाभिस्तु गोमयेन सभस्मना ॥
क्षालयेच्छिल्पिसंस्पर्शदोषाणामुपशान्तये ॥
ततः शुभ्रेण वस्त्रेण तत्संमृज्य सुगन्धिना ॥
पश्चिमायां तु विन्यस्य गर्भमानविधानवित् ॥
रोचनालिप्तसूत्रेण गर्भमास्फालयेन्नृप ॥
ततस्तदूर्ध्वभागं तु त्रिभिर्भागैर्विभाजितम् ॥
कृत्वा समालिखे[6]द्वृत्तमधोभागे तु लक्षणम् ॥
गोकर्णसदृशाकारं तीक्ष्णाग्रं वा समालिखेत् ॥

---

१ स्नानाम्भस्युप्तलो°–क. २ नराधिप–क. ३ °गुलान्युद्गिरंतियाः–क; मङ्गलानीरयन्ति या । पाठात्पुष्टिरस्वरात् ॥ अन्याश्चं–स. ४ पृथग्विधान्–क. ५ सुक्लिष्टं–क. ६ लिखेद्वृत्रभ्रमधो–स.

[१]ब्रह्मसूत्रावतारार्थं मणिरेखां समां शुभाम् ।
न करालां न चोत्तानां न वक्रां सर्वतः समाम् ॥
ज्येष्ठस्याष्ट[२]यवप्रत्यां मणिरेखां प्रकल्पयेत् ॥
शेषाणामपि लिङ्गानां विदित्वा यामविस्तरौ ॥
कारयेत्स नवं मन्त्री लक्षणं सूक्ष्ममिच्छता ॥
मृद्दारुशैललिङ्गानां लक्षणं समुदाहृतम् ॥
लक्षणे तु कृते लिङ्गं त्र्यहादूर्ध्वं न धारयेत् ॥
त्र्यहादूर्ध्वं निविष्टे तु पूजनं न भवेत्सदा ॥
सिद्धिभङ्गं करोत्याशु साधकानां न संशयः ॥
तस्मात्तन्निपुणो मन्त्री शोभनेऽहनि यत्नतः ॥
शुक्लवासाः शुचिः स्नातो मणिरेखां प्रकल्पयेत् ॥
कांस्यदोहां रौप्यखुरां हेमशृङ्गीं पयस्विनीम् ॥
गां दद्यात्स्थापकश्रेष्ठो मणिरेखां [३]समालिखेत् ॥
न नखेन न काष्ठेन नाङ्गारेण न भस्मना ॥
लक्षणं कल्पयेच्छम्भोर्न कपालाश्मलोष्टकैः ॥
[४]सुवर्णं शुचिमादाय प्रयत्नेन नराधिप ॥
सूत्रकार्यं प्रकुर्वीत यत्नेन न यथेच्छया ॥

---

१ भिन्नं । तत् कामभेदेन त्रिधा निर्तनया शुभम् ।
गोकर्णसदृशाकारं शान्तिपुष्टिजयावहम् ॥
तीक्ष्णाग्रमभिचारेषु वृत्तं सर्वार्थसाधकम् ।
भागार्धभागिकं भागैर्भागादर्धमिदं ततः ॥
भिन्नं तत् कामभेदेन त्रिधा निर्तनया शुभम् ॥
गोकर्णसदृशाकारं शान्तिपुष्टिजयावहम् ॥
त्यक्त्वातृतीयभागस्य मूलेवेद्यां समालिखेत् ।—
ब्रह्मसूत्रावतारार्थं—क.

२ °यवप्रायां—स. ३ समालिखन्—स. ४ सौवर्णी—क.

ॐ नमो भगवते रुद्राय हिरण्यरेतसे पराय परमात्मने ॥ विश्वरूपाय उमाप्रियाय नमः ॥

अलक्षणं यतो लिङ्गं न भवत्यर्थसिद्धये ॥
तस्मात्सर्वप्रयत्नेन लक्षणं तु प्रकल्पयेत् ॥
नातिस्थूलं कृशं राजन् विषमं [1]विक्रमं तथा ॥
मध्यमं लक्षणं तत्र पूरयेन्मधुसर्पिषा ॥
[2]नदीकूलात्समादाय वल्मीकाच्च मृदं शुभाम् ॥
ताभिर्गन्धोदका[3]स्नाभिः क्षालयेल्लिङ्गमादितः ॥
तन्महेशाभिजप्तेन पञ्चगव्येन बुद्धिमान् ॥
स्नापयेद्दिव्यगन्धैश्च कषायैः क्षीर[4]वृक्षजैः ॥
कुङ्कुमाक्तेन तोयेन प्रक्षाल्य तदनन्तरम् ॥
गन्धमाल्यैरलङ्कृत्य चन्दनागुरुधूपितम् ॥
वाचयित्वा द्विजवरान्रुद्रायेत्यत्र संस्मरेत् ॥
शनकैर्लिङ्गमुद्धृत्य पीठस्योपरि विन्यसेत् ॥
तस्य दक्षिणतः स्थित्वा शिवमात्मानमेव च ॥
मानसीं वृत्तिमास्थाय कुर्यात्सकलनिष्कलम् ॥
सकलीकृत्य देवेश[5]मेवमर्चादि पूर्ववत् ॥
रक्तवस्त्रयुगं चास्य वामेन परिधाय च ॥
ततो रोचनया लिङ्गमभ्यज्य तु घृताक्तया ॥
[6]अलक्तकैश्च.... संस्पृ[7]शेत्सुगन्धिभिः ॥
चतस्रस्ताः स्त्रियः श्रेष्ठाः क्रमादर्घादिपूर्वकम् ॥
सव्यापसव्यसूत्रेण संस्पृशेयुः कुशैरपि ॥

---

१ विकृतं–क; ने; स. २ नदाकलात्समादायं–ने; वल्मीकाच्छमृदं शुभम्–स. ३ °वर्जिते–क. ४ °दकात्साभि–स. ५ °मेवमर्घादि°–क; °शामेवमर्चादि–स. ६ अलकैश्च–क. ७ °शेत्सस्रु–क; °शेत सुग°–स.

अष्टार्घपात्रतोयेन वस्त्रालम्बेन बुद्धिमान् ॥
[1]स्पृष्ट्वाष्टौ मूर्तयः शम्भोस्ताभिरर्घं प्रदापयेत् ॥
वस्त्रालम्बैश्च विधिवद्दधिक्षीरघृतादिभिः ॥
स्नापयेदीश्वरं मन्त्री यथालाभमनुक्रमात् ॥
उद्वर्त्तयेत्ततो लिङ्गमङ्गोद्वर्तनकैः [2]शुभैः ॥
तस्तथेदं यथा दिव्यैश्चामलकादिभिः ॥
चतुर्भिः कलशैः पूर्वमष्टभिस्तदनन्तरम् ॥
स्नापयेद्देवदेवेशं शूलिनं मन्त्रसंस्तुतैः ॥
सितवस्त्रेण देवेशं परिमृज्य सुगन्धिना ॥
चन्दनेनालभेत्स्नानं गन्ध[3]वाद्यैरलङ्कृतैः ॥
[4]परिधाय्य च गुह्येन शुक्लवस्त्रं सुगन्धि[5]भिः ॥
पूजयेत्कुसुमैश्चित्रैर्भूषणैश्चाभिमन्त्रितैः ॥
[6]ततो मूर्तिधरानष्टावङ्गुलीयककुण्डलैः ॥
आहूय वस्त्रयुगलैर्गन्धमाल्यैश्च पूजयेत् ॥
तैः शाययीतमीशानमुद्धृत्य कलशैः शुभैः ॥
पूर्वस्थितिपदं कृत्वा शयने सन्नियोजयेत् ॥
शुभेन सितवस्त्रेण गोप्ता इत्यत्र संस्मरन् ॥
छादयेत्पूजयित्वा तु विविधैः कुसुमैर्विभुम् ॥
लोकपालैश्च संयुक्तं मङ्गलैश्च समन्ततः ॥
तर्पयेद्विविधैर्भक्ष्यैरधिवासितमीश्वरम् ॥
देवीं [7]गणाधिका राजन् [8]पिण्डिकारूपधारिणीम् ॥
शिववद्रक्तवसनां [9]रुद्रमन्त्रेणाऽधिवासयेत् ॥

---

१ स्पृष्ट्वा मूर्तयः शंभोस्तास्वेवार्घं प्रदापयेत्–क. २ °भम्–क. ३ °वाद्यैः –क. ४ परिधाप्य –स. ५ °ना–क. ६ नभो–क. ७ गणादिका–स. ८ पिष्टका–क. ९ समुद्रेणा–क.

पिण्डिकाभिहिता देवी लि[1]ङ्गं देवः प्रकीर्तितः ॥
तयोर्यः कुरुते योगं [2]स गच्छेत्परमं पदम् ॥
न हि देवस्य देव्याश्च वियोगोऽस्ति कदाचन ॥
अतोऽर्थमनयोर्योगः क्रियते समकालिकः ॥
पिण्डिका[3]रहितं लिङ्गं स्थापितं विधिनापि[4] यत् ॥
न कल्पयति सान्निध्यं पूजां गृह्णाति नैव च ॥
शोकमावहते कर्तुः पूजकानामनिर्वृतिः ॥
तस्मान्न स्थापयेल्लिङ्गं पिण्डिकारहितं बुधः ॥
विनाऽपि पिण्डिकां रूपं लोभादज्ञानतोऽपि वा ॥
यः स्थापयति सोऽभ्येति नरकं पापकर्मकृत् ॥
वाहनं च महेशस्य धर्मं वृषभलक्षणम् ॥
गन्धपुष्पोपहारैश्च तमप्येवाधिवासयेत् ॥
अनेनैव विधानेन मन्त्री स्कन्दविनायकौ ॥
स्थापयेद्देवताश्चान्याः [5]स्वमन्त्रैः सपितामहाः ॥
अधिवास्य ततो देवं देवीं वृषभमेव च ॥
गणानां[6] त्वा विधिवद्दद्याद्बलिं दिक्षु विदिक्षु च ॥
तत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः ॥
पिशाचा मातरः [7]सर्वा गणाविद्याधरास्तथा ॥
भूतानि पितरश्चैव ऋषयोऽन्याश्च देवताः ॥
[8]परिवार्येह तिष्ठन्ति देवेशमधिवासितम् ॥
शङ्करः सर्वदेवानां पूज्यो वन्द्यः [9]परं गुरुः ॥
तस्मादेवं विधानज्ञः पूजयेद्बलिभिः पुरा ॥
सितोष्णीषधरस्तस्माच्छ्रद्दधानो जितेन्द्रियः ॥

---

१ °गो देव–क. २ संगच्छेत्–ने. ३ °विहितं–क. ४ तत्–क; वत्? –स. ५ सुखमन्त्रैः–क. ६ °नां विधि°–क, ने, स. ७ सिद्धा–क. ८ यानि वापीह तिष्ठंति–क ९ परो गुरुः–स

मौनी भस्मसु संस्नातः प्रसन्नवदनेक्षणः ॥
कुण्डेष्वनन्यधीः सम्याजनयित्वा हुताशनम् ॥
अग्निकार्यं ततः कृत्वा मन्त्री मूर्तिधरैः सह ॥
शिवाङ्गब्रह्मविद्येशलोकपालाऽत्र संयुतैः ॥
होमं प्रकल्पयेन्मन्त्रैर्यथाशास्त्रमनिन्दितः ॥
पूर्वेण ब्रह्मभिर्होममङ्गैर्दक्षिणतस्तथा ॥
विद्येशैः पश्चिमे [1]तत्र लोकपालैस्तथोत्तरे ॥
अस्त्रैर्विदिक्षु गायत्र्या तैश्चैव सहितो हुनेत् ॥
शिखिनः सर्वमन्त्राणि [2]मन्त्रपूर्णाहुतिं क्षिपेत् ॥
घृतेन पयसा वाऽपि तिलैर्वाऽपि घृतप्लुतैः ॥
होमं कुर्याद्यथा[3]लाभं मधुमेग्नौ (मधुनाऽग्नौ?) विधानवित् ॥
[4]पालाशीभिः समिद्भिर्वा घृताक्ताभिरसम्भवे ॥
क्षीरवृक्षोद्भवाभिर्वा लाजैर्दूर्वाभिरेव वा ॥
अक्षतैस्तण्डुलैर्वाऽपि फलैः पुष्पैः सपल्लवैः ॥
तर्पयेद्भक्ष्यभोज्यैर्वा घृतालाभे [5]शिवानले ॥
मन्त्रमेकैकमेवं तु हुत्वा विंशतिसङ्ख्यया ॥
त्रिःकृत्वा संस्पृशेद्देवं शिरस्युरसि पादयोः ॥
एवमेतेन विधिना योऽधिवासयतीश्वरम् ॥
तर्पितं चार्चितं तेन जगदेतच्चराचरम् ॥
तर्पयित्वा महेशानमेवमग्निशरीरिण[6]म् ॥
संहृत्य हृन्मये व्योम्नि शिवालयमतःपरम् ॥
कलशानुपसंहृत्य बलिं नैवेद्यमेव च ॥

---

१ नैव–क. २ मन्ते–स. ३ °युक्तं–क. ४ पालाशीभिश्च समिद्भिश्च व्यक्ताभिश्शत-संख्यया–क. ५ जितानले–क. ६ णः–क.

अर्चयेत्स्नापयेद्राजन् पूजयेच्च यथाविधि ॥
सद्येन स्नापनं कुर्याद्[1]घोरेण विलेपनम् ॥
वामेन चास्त्रविन्यासं ईशानेनार्चयेच्छिवम् ॥
पुष्पैर्नानाविधैर्दिव्यैः पद्मैर्हृदयहारिभिः ॥
मुकुटैर्मणिरत्नादि मौक्तिकच्छुरितान्तरैः ॥
[2]देवमेवमलङ्कृत्वा अस्त्रेणार्घं निवेद्य च ॥
प्रणिपत्य यथान्यायं वाचयित्वा द्विजोत्तमान् ॥
ततो मूर्तिधरैरीशं स्वहृदिस्थमस्य वा स्थितैः ॥
अष्टाभिरालभेन्मन्त्री युगपत्स्वासु मूर्तिषु ॥
स्वयं मूर्तिधरैश्चैव चतुर्भिः समलङ्कृतम् ॥
पञ्चाङ्गेन समालभ्य कलाकलितविग्रहम् ॥
पुण्याहशब्दनिर्घोषैः गीतवादित्रनिःस्वनैः ॥
वेदशब्दजयाशीभिः पवित्रैस्तु निबन्धनैः ॥
सद्योजातमनुस्मृत्वा तस्मादुद्धृत्य भूतलात् ॥
सुमन्त्रितं नयेन्मन्त्री सममस्खलितं विभुम् ॥
ध्रियमाणेन दे[3]वस्य आतपत्रेण मूर्धनि ॥
चित्रैः पट्टवितानैर्वाध्रियमाणैर्मनोरमैः ॥
चामरैर्हेमदण्डैश्च वीज्यमानमितस्ततः ॥
स्वस्तिवा[4]चि चतुर्दिक्षु पुरं कृत्वा प्रदक्षिणम् ॥

---

१ °दघोरेण–स. २ विचित्रहारकटकैः केयूरैः कटिसूत्रकैः ।–ने, स; सूत्रकैः । सोवर्णमणियुतैः । देवमेवमलंकृत्वा–ने; सूत्रकैः । सौवर्णैर्मणिभिर्युतैः । देवमेव°–स;

कुण्डलैरुपवीतैश्च सौवर्णैर्मौक्तिकादिभिः ॥
शिरसेवमलंकृत्य वस्त्रेणार्घं निवेदयेत् ।
प्रणिपत्य यथान्यायं—क.

३ देवेश–क. ४ वाच्यं चतु°–क; वाच्यचतु°–ने, स.

[1]अन्यथा........न द्रुतं न विलम्बितम् ॥
[2]प्रवेशयेत्प्रयत्नेन पुनरानीय चे[3]श्वरम् ॥
न क्रुद्धो न च दीनात्मा प्रसन्नमुखलोचनः ॥
समसूत्रं तु निष्कम्पमचलासनमीश्वरम् ॥
शनैर्ब्रह्मशिलायां तु गुह्यमन्त्रेण विन्यसेत् ॥
पिण्डिकामप्यनेनैव मन्त्रेण विधिपूर्वकम् ॥
न्यसेदुपारि देवस्य यथा लिङ्गं न पीड्यते ॥
पिण्डिकायाः प्रसङ्गेन यदा स्फुटति मस्तके ॥
अशब्दं वा सशब्दं वा तदा राजा विनश्यति ॥
[4]चक्रे तु स्फुटिते लिङ्गे यजमानो विनश्यति ॥
उदरे स्फुटिते लिङ्गे दुर्भिक्षमुपजायते ॥
पृष्ठतः स्फुटिते लिङ्गे [5]राजभङ्गो भवेन्नृप ॥
शकलं मुञ्चति यदा तदाचार्य्यो विनश्यति ॥
एतन्निमित्तमनले शिवेनाङ्गैश्च मन्त्रवित् ॥
घृतेन सप्तजुहुयादाहुतीस्तत्प्रशान्तये ॥
तिर्य्यग्गते च चलिते स्खलिते नमितेपि[6] वा ॥
नष्टसूत्र[7]मखेध्वस्ता........समागते ॥
[8]पत्रभङ्गे दिशां दाहे निर्घातोल्कां निपातने ॥
भूभृतां वधायाशु चलने केतुदर्शने ॥
स्फुटे ते वेदिकर्माख्यां लिङ्गे वेदिच्युते तथा ॥
पाषाणवृष्टिपतने तथा सृग्वृष्टिदर्शने ॥

---

१ अनुयाचतु चक्रं च न द्रुतं–क. २ आवेशयेत्–क. ३ ईश्वरम्–क. ४ वक्त्रे तु–स. ५ राष्ट्र–ने, स. ६ भवा–क. ७ °मुखेऽस्तात् पतिते स्रमिमागते–क; मुखे धस्ता–स. ८ कल्पिते वनिते चक्र शब्दे शांभवस्थिते । पत्रभंगे–क; वत्रभङ्गे–ने.

एताँश्चान्याँश्च मेधावी वीक्ष्योत्पातान् समुत्थितान् ॥
अघोरेणाहुतिशतं जुहुयात्तत्प्रशान्तये ॥
संस्थाप्य परमेशानमेवमुत्पातवर्जितम् ॥
पूजयेद्विधिवद्भूयः सर्वोपकरणैर्विभुम् ॥
स्थापयेद्वृषभं चैव शिवस्याभिमुखं ततः ॥
पूजयेद्दिव्यपुष्पैश्च [1]गन्धैश्च विधिपूर्वकम् ॥
स्थापयेद्द्वारपालौ च विधिवत्तदनन्तरम् ॥
यजेच्चन्द्रेश्वरं देवं यथावच्च गजाननम् ॥
उमां भगवतीं दुर्गां तथा [2]भृङ्गिरिटिं नृपः ॥
अतः परं चतुर्थेह्नि द्वितीये वा समाहितः ॥
तस्मिंश्चाहन्यनुद्विग्नश्चतुर्थीहोममाचरेत् ॥
लेखनाभ्युक्षणाद्येन कर्मणा विधिपूर्वकम् ॥
कृत्वा शिवालयं मौनी पर्युक्ष्य जुहुयात्त[3]तः ॥
त्रिभिर्व्याहृतिभिः पूर्वं हुत्वाग्निं मनसा सकृत् ॥
हुंफट्कारामभिजप्तेन तोयेनाभ्युक्ष्य पावकम् ॥
आहुतीः पञ्चगायत्र्या जुहुयात्पञ्च पञ्च च ॥
एकैकां पञ्चभिर्दद्यात्सकृद्व्याहृतिभिः पुनः ॥
पूर्णाहुतिं शिवेनैकां दत्त्वोपरि यथाविधि ॥
कृतहोमोऽग्निमभ्यर्च्य प्रणिपत्य विसर्जयेत ॥
कृतकृत्यस्तथा कर्ता प्रसन्नवदनेक्षणः ॥
पूर्वं मूर्तिधरान् सर्वान् देशिकांश्च समागतान् ॥
ततः प्रव्रजितांश्चान्यान् सगणासर्व....कान् ॥

१ भक्षैश्च–क. २ भृगिरिटिं–ने, स. ३ ततः। पूर्णाहुतिं शिवे[न]कां–क.

वाचकान् गायकांश्चैव पूजयेच्छक्तितः क्रमात् ॥
इति मूर्तिधरैः सम्यक् देशिकैश्च समागतैः ॥
सुखोपविष्टमाचार्यमर्चयेद्विधिवन्नृप ॥
[1]सुशुक्लैर्वस्त्रयुगलैर्मणिरत्नादिकुण्डलैः ॥
सौवर्णैरुपवीतैश्च कटकैः कटिसूत्रकैः ॥
हस्त्यश्वरथवर्यैश्च गोभूमिरजतादिभिः ॥
सहस्रदक्षिणाभिश्च पूजयेद्विधिपूर्वकम् ॥
पूजिते हि गुरौ राजन् प्रतिष्ठा सफला भवेत् ॥
संक्षेपात् शृणु विप्रेश प्रति[2]ष्ठामादितः क्रमात् ॥
कृत्वा तु मण्डपं दिव्यं शास्त्रोक्तं सुप्रतिष्ठितम् ॥
दीपमाला परिक्षिप्तं द्वारदामोपशोभितम् ॥
[3]अकालमूलान् कलशान् द्वारेषु विनिवेशयेत् ॥
[4]वस्त्रपूतेन तोयेन पू[5]रयित्वा विचक्षणः ॥
मन्त्रपूताँस्ततः सर्वान् कुर्वीत स्थापकः शुचिः ॥
[6]चतुःसमुद्रः मन्त्रेण ज्येष्ट........ति च मन्त्रयेत् ॥
चतुर्भिः सहिरे........क्रमाद्विप्राभिमन्त्रितैः ॥
सर्वासु दिक्षु........पुनरेव तु मन्त्रयेत् ॥
कृतलक्ष्म यदा लिङ्गमानयेदुत्तरामुखम् ॥
बाह्यमण्डपके[7]न्यस्य रक्षां कुर्वीत यत्नतः ॥
ततोऽर्चयेत् मधुना दद्यादर्घाभिषेचनम् ॥
वासांसि च महार्हाणि मन्त्रेण प्रतिपादयेत् ॥
मन्त्री दीक्षा'तपसोस्तनूरसी'ति ॥

---

१ सशुभ्रैः-क. २ °ष्ठापनमादितः-क. ३ सकाल°-क. ४ मन्त्रपूते°-क. ५ पूजयित्वा -स. ६ चतुस्समुद्रेण तोयेन ज्येष्ठायेंति च मन्त्रितैः-क. ७ °के न्य°-क.

यातयामानि वस्त्राणि अन्यदेव घृतानि च ॥

[1]भक्षितान्याखुभिर्यानि न दद्यात्तानि सम्भवे ॥

[2]अर्घं दत्वा च नमस्तुभ्यं समाहितः ॥

ततस्त्वन्यन्महद्दिव्यं प्रागुक्तं मण्डपं नयेत् ॥

शय्या तद्वत्प्रकर्तव्या शैलेयेषु विशेषतः ॥

पूर्वाग्रामुत्तराग्रां वा कुशैः कृत्वा तु संस्तरम् ॥

शोभनेनैव वस्त्रेण समन्तात्परिवेष्टयेत् ॥

प्रासादाभिमुखं कृत्वा मन्त्रपूर्वमुपानयेत् ॥

नमः स्वपद्भ्यो रुद्रेभ्यो जाग्रद्भ्यश्च नमो नमः ॥

औदुम्बरं तु कलशं पूरयित्वा तु मन्त्रतः ॥

शिरस्थाने तु दातव्यो[3] 'देव[4]स्य त्वे'ति सुव्रतः ॥

'औदुम्बरं' ताम्रमयम्[5] ।

ताम्रपात्रं ततो देयं पादस्थाने विशेषतः ॥

क्षीरं क्षौद्रं घृतं दत्वा मन्त्रमेतमुदाहरेत् ॥

'अभित्वा शूर नोनुम' इति ।

विद्वान् प्रतिसरांस्तत्र दद्यात्सिद्धार्थकान् शुभान् ॥

'प्रतिसरो' महत्सूत्रं, कङ्कणमिति प्रसिद्धम् ।

श्वेताः सुमनसो दत्वा धूपं दद्याच्चतुर्दिशम् ॥

आत्मनो दक्षिणे पार्श्वे मन्त्रमेतमुदाहरेत् ॥

'आप्यायस्व' 'समे तु ते' 'विश्वतः' '[6]सोमवृत्यया'

ततः सर्वप्रयत्नेन शय्यां मन्त्रेण दापयेत् ॥

---

१ दूषितान्यरर्षिभिर्यानि–क. २ अर्घं दत्वार्चयित्वा च नमस्तुभ्यं–क. ३ व्या–क. ४ °श्चेति च सु°–क. ५ क्षिणाति उक्थ ते यशः–क; ताम्रमयम् ।

ताम्रपात्रं तु कालशं पूरयित्वा तु मन्त्रतः ॥

शिरःस्थाने तु दातव्यो देवस्य त्वेति सुव्रत ॥

'औदम्बरं' ताम्रमयम् । ताम्रपात्रं ततो–स. ६ सोमवृष्ण्या–स.

छत्रं पताकयोपेतं मन्त्रपू[1]र्वं तु दापयेत् ॥

[2]'बृहस्पतेश्छन्दिरसी'ति ।

विरूपं जनयित्वा तु होमं शान्तिक[3]माचरेत् ॥

तपश्च तेजश्च श्रद्धा चेति शमीपलाशन्यग्रोधाश्च ।

औदुम्बरसहस्राणि पञ्च हुत्वा घृतप्लु[4]ताः ॥

महाव्याहृति[5]होमेन जुहुयात्स्थापकः शुचिः ॥

सम्यक् हुत्वा तु देवस्य मू[6]र्द्धनि संस्पृशेत्तदा ॥

कुशोदकं गृहीत्वा तु [7]प्रतिमन्त्रं विधानवित् ॥

'आपोहिष्ठे'ति मन्त्रेण त्रिधा हि प्रक्षिपेज्जलम् ॥

भक्ष्यभोज्योपहारैश्च बलिं कृत्वा समाहितः ॥

[8]प्रकीर्ण....दातव्यो देवदेवस्य सन्निधौ ॥

'त्र्यम्बकं यजामहे' इति प्रकीर्णा दातव्या भूतेभ्यो [9]मन्त्रपूर्वकम् ॥

[10]सर्वतन्त्रबलिं कृत्वा दत्त्वा तेभ्यश्च दक्षिणाम् ॥

'नीलरुद्रां'बलिं कृत्वा दिक्षु सर्वासु निक्षिपेत् ॥

विदिशास्वपि सर्वासु ब्राह्मणाँ[11]श्च प्रपूज्य तु ॥

ब्राह्मणान् भोजयित्वा तु शैवान् पाशुपतांस्तथा ॥

गृहस्थांश्च ततः शय्यां दत्त्वा तेभ्यश्च दक्षिणाम् ॥

'नीलरुद्रां' जपेत्तत्र नीलसूक्तं तथैव च ॥

अथर्वशिरसं चैव सर्वोत्पातप्रशान्तये ॥

[12]रुद्रां पुरुषसूक्ताँश्च [13]श्लोकाध्यायं सशुक्रियम् ॥

---

१ °र्वमुदाहरेत्–क. २ बृहस्पते छन्दिरसीति–स. ३ °मारमेत्–क. ४ °तान्–क. ५ मन्त्रेण–क, ने, स. ६ °नं स्पृशेत्–क. ७ अभिमन्त्रविधा°–क. ८ अप्रकीर्णाश्च दा°–क. ९ मातृपूर्वकम्–ने. १० सर्वं भद्रबलिं कृत्वा दिक्षु सर्वासु निक्षिपेत्–क. ११ °न् प्रतिपूज्य च–क. १२ रुद्रान् पुरु°–स. १३ श्लोकाध्यस्तं–स.

[1]ब्रह्माणं सूर्यदेवत्यमध्वर्युर्दक्षिणे जपेत् ॥
देवव्रतं सगायत्रं ज्येष्ठसामरथन्तरम् ॥
वामदे[2]वं तथा सूक्तं [3]छन्दोगो ह्युत्तरे जपेत् ॥
स्थापकस्तु ततः साध्यं [4]साम....वा ॥
जपतस्तस्य विप्रस्य न दोषः स्थापने भवेत् ॥
वामदेवं तथा रौद्रं सा........ध्रुवं स्मृतम् ॥
गायकैर्नर्तकैश्चैव रात्रौ कुर्यान्महोत्सवम् ॥
अहोरात्रं त्रिरात्रं वा देवदेवाधिवासने ॥
अधिवासं ततः कृत्वा देवं वेश्म प्रवेशयेत् ॥
पातयित्वा तु सूत्रेण परिमृज्य गृहाणि च ॥
[5]गृहाणि तु समासाद्य सूत्रच्छेदं तु लक्षयेत् ॥
होमशान्तिः प्रकर्तव्याः सूत्रच्छेदे दिशं प्रति ॥
[6]द्विहस्तं च त्रिहस्तं वा कृत्वा श्वभ्रस्य विस्तरम् ॥
ज्ञात्वा प्रमाणं लिङ्गस्य ततः श्वभ्रं तु कारयेत् ॥
सुपक्वाभिरिष्टकाभिः श्वभ्रं बध्नीत वै शुभम् ॥
कुशोदकेन पूतेन गोमूत्रेण च शोधयेत् ॥
शोधयित्वा यथान्यायं पायसेन तु लेपयेत् ॥
अक्लिन्नेन सुपक्वेन नैवेद्यं रुदनो [7][ तण्डुलोद्भवम् ] ।
निक्षिपेत् वारिमन्त्रेण पायसं ब्रह्मवित्तमः ॥
गौरो यः पुरुषः सर्वौषधिमयोमतः ॥

---

१ ब्राह्मणं–क. २ °यं–क. ३ संयोगादुत्तरे–क. ४ सामद्रवमनोपमम् । यद्वहाच्छही कुराभितः शितश्च सर्वधर्मवित् । धर्मेति निधनं गत इति सत्यं गायत्रितं वदेति ऋचं वाचमिति जपेत् स्थापयेत् । पातयित्वा तु सूत्राणि परिमृज्य गृहाणि च–क. ५ दृढानि च समा°–क. ६ द्विहस्तं चतुर्हस्तं वा कृत्वा श्वभ्रस्य विस्तरम्–क. ७ तण्डुलोद्भवम् । निक्षिपेच्चापि मन्त्रेण पायसं ब्रह्मवित्तमाः–क; ओदनो...निक्षिपेद्वारिमन्त्रेण–स.

नक्षत्राधिपतिः सोमस्तस्मै नित्यं नमो [1]नमः ॥
नीलं गौरवतां ब्रह्म नैर्ऋत्यां विनिक्षिपेत् ॥
ईशानः पुरुषः शुक्लः सर्वविद्याधिपो महान् ॥
गन्धर्वसेवितश्चैव तस्मै नित्यं नमो नमः ॥
सर्वबीजानि गन्धाश्च गैरिकं काञ्चनं वृषम् ॥
पद्मकेन तु संयुक्तं ब्रह्मस्थाने निवेशयेत् ॥
पद्मयोनिश्चतुर्मूर्तिर्वेदवासाः पितामहः ॥
यज्ञं रक्षति यो नित्यं तस्मै नित्यं नमो नमः ॥
मन्त्रः ॥
यदि न स्याद्यथोक्तं तु मणिरत्नं [2]यथा दिशम् ॥
सुवर्णं तत्र दातव्यं विदुषा [3]सिद्धिमिच्छता ॥
शब्देभ्यो नमः ॥ [4]विश्वेदेवेभ्यो नमः ॥
गन्ध[5]र्वाय नमः ॥ प्रजापतये नमः ॥
'ब्रह्मजज्ञानं प्रथममि'ति मन्त्रम् ॥
पटेन महता चैव समन्तात्परिवेष्टयेत् ॥
सुरक्षितं तु कर्तव्यं वि[6]घ्नाद्यत्र भवन्ति वै ॥
समाप्ते तु तथा होमे मन्त्रेणोत्थापयेच्छिवम् ॥
मन्त्रः ॥ 'उत्तिष्ठ ब्रह्मणस्पते'।
स्नपनं च प्रकुर्वीत विधिदृष्टेन कर्मणा ॥
पुनरन्यानि वासांसि दद्यात्प्रयतमानसः ॥
लिङ्गं सुचित्रितं कृत्वा रज्जुभिश्च यथाविधि ॥
शुचिभिः ब्राह्मणैर्वृद्धैः सर्वशास्त्रविशारदैः ॥

---

१ °नमः । सर्वबीजानि–क. २ यथोदितम्–क. ३ सिद्धिमि मन्त्रम् पठेन महता–ने, स. ४ विश्वेभ्यो–क. ५ °र्वेभ्यो–क. ६ विघ्ना ह्यत्र–स.

प्रदक्षिणं ततः कृत्वा देवदेवं प्रवेशयेत् ॥

पुण्याहजयशब्दैश्च ब्रह्मघोषैश्च पुष्कलैः ॥

द्वारस्थाने तु देवस्य अर्घं दत्वा समाहितः ॥

प्रवेशयेत्ततः क्षिप्रं मन्त्रमेनमुदाहरेत् ॥

'विश्व[1]प्रभवसी' तीति ॥

रुद्रपीठे ततोऽन्यस्य पुनः सूत्राणि लक्षयेत् ॥

आश्रितं किञ्चिदीशानं मङ्गलार्थं भवेत्पुनः ॥

पायसेनाऽथ मधुना मूलं देवस्य लेपयेत् ॥

'मधुव्वाता' इत्यनेन मन्त्रेण निमित्तमशुभं दृष्ट्वा किञ्चित्कालं विधारयेत् ।

आवाहयेत्ततो देवमर्घं दत्त्वा समाहितः ॥

यस्य सिंहा रथे युक्ता व्याघ्रभूतगणास्तथा ॥

ऋषयो लोकपालाश्च देवौ स्कन्दबृहस्पती ॥

गणाश्च मातरश्चैव विष्णुः सोमः पिताम[2]हः ॥

नागा यक्षाश्च गन्धर्वा ये तु देवा नमश्चराः ॥

आह्वये त्र्यक्षमीशानं [3]शिपिविष्टं सतीपतिम् ॥

आगच्छ भगवन् देव लोकानुग्रहकाम्यया ॥

इदमासनमासाद्य ब्रह्मणा निर्मितं तव ॥

"शिवो भव विश्वो भव ध्रुवार्थं मयासी"ति प्रतिष्ठापयेत् ।

ध्रुवा द्यौर्ध्रुवा पृथ्वी ध्रुवा इमे पर्वताः ॥

---

१ °प्रभवसीति—ने, ख°. २ °हाः—क. ३ शिवं रुद्रमुमापतिम्—क.

ध्रुवो यज्ञो यजमानो ध्रुवो राजा ध्रुवं विश्वमिति नमो नमः ॥

स्थापयेन्निष्प्रकम्पं च निःशब्दं निश्चलं तथा ॥

स्थाप्यमानं यदा लिङ्गं कम्पते चलतेऽपि वा ॥

तदा शान्तिः प्रकर्तव्या पौष्टिकी नाभिचारिणी ॥

दिशां तु देवमुद्दिश्य दिशासु चलनेन वा ।

ऐन्द्रीं च कारयेच्छान्तिं दद्याच्च वृषभं शिवम् ॥

याम्यां च कारयेच्छान्तिं दद्यादश्वं च दक्षिणाम् ॥

वारुणीं कारयेच्छान्तिं दद्याद्विप्राय वाससी ॥

सौम्यां च कारयेच्छान्तिं धेनुं दद्याद् द्विजातये ॥

यस्यां यस्यां चलेद्देवस्तस्यां शान्तिं तु कारयेत् ॥

आवाहयेत्ततो देवमर्घं दत्त्वा यथाविधि ॥

आपः क्षीरं कुशाग्राणि अक्षतादधितण्डुलाः ॥

तिलाः सिद्धार्थकाश्चैव अष्टाङ्गोर्घः प्रकीर्तितः ॥

पञ्चगव्यं ततश्चैव[1]विप्रसंसर्पं.... ॥

रक्तोदकं गन्धवारि-कुशोदक-फलोदकम् ॥

अपामार्जनकं वाऽपि [2]कुर्यात्तत्र विचक्षणः ॥

स्नापयेत्संहितामन्त्रैः सर्वैरेव समाहितः ॥

## स्नानस्यावाहनमन्त्रः ॥

यस्य सिंहा रथे युक्ता व्याघ्रा यस्यानुगामिनः ॥

तमहं त्र्यक्षमीशानं रुद्रमावाहयाम्यहम् ॥

---

१ क्षीरं विप्रसमर्पणम्—क. २ कारयेच्च विच°—क,

'आगच्छागच्छभगवन् सर्वगणपरिवारसपार्षदा ॥

स्वागतं भगवते महादेवाय रुद्राय सपार्षदाय नमो नमः ॥

इमा आपः शिवाः शिवतमाः शान्ताः शान्ततमा अमृता अमृततमाः ॥

अनेन मन्त्रेणार्घं दद्यात् ।

'नमस्तेऽस्तु मा मा हिंसीः शिवो भव सुमना भव' इति पञ्चगव्यमन्त्रः ॥

'पञ्चनद्यः सरस्वती'त्येवमादितः ॥ घृतमन्त्रः 'तेजोसिशुक्रमसी'त्येवमादिः 'सावित्र्या क्षीर'मभिमन्त्रयेत् ॥

[1]पावमानः 'सोयं' इति देवस्योद्वर्तनं स्मृतम् ।'

रत्नोदकमन्त्रः 'हिरण्यगर्भ' इत्येवमादिः ॥

उपमानिकमन्त्रः 'शन्नोदेवीरभिष्टये' इत्येवमादिः ॥

शान्त्युदकं प्रकर्तव्यं हुताग्नौ विधिवद्द्विजैः ॥

'आशुः शिशानो वृषभ' इत्येवमादिः ॥

तैजसान्यर्घपात्राणि मृण्म[2]यानि न दापयेत् ॥

सौवर्णं वा भवेत्सर्वं रौप्यं वा ताम्रमेव [3]च ॥

अन्यथा क्रियमाणे तु विपरीतफलं भवेत् ॥

सुस्नातेति द्विजा ब्रूयुः सर्वे च व्रतिनस्तथा ॥

गन्धपुष्पाणि देयानि धूपो देयस्तथैव च ॥

दीपान्प्रज्वाल्य मन्त्रेण नाम किञ्चिदुदाहरेत् ॥

द्रव्यहीनं न कर्तव्यं मन्त्रहीनं विशेषतः ॥

इत्येषा तु शुभा पूजा पूर्वा सुरभिगन्धिनी ॥

---

१ पवमानः–स. २ °येन च दाप°–क. ३ वा–क.

[1]पूजा ब्रह्मपवित्रेण प्रति[2]गृह्णीष्व शङ्क[3]रः ॥
[4]वनस्पतिरसो दिव्यो गन्धाढ्यो मम सुव्रत ॥
आहारः सर्वदेवानां गुग्गुलुः प्रतिगृह्यताम् ॥
अग्निर्ज्योतिश्च शुक्रश्च मोहपूर्वो विभावसुः ॥
प्रभाकरो महातेजा दीपोऽयं प्रतिगृह्यताम् ॥
ततश्चतुर्विधैर्वस्त्रैर्युग्मैर्युग्मैश्च च्छा[5]दयेत् ॥
पूर्वेण पट्टजं दद्याद्रोमजं दक्षिणेन तु ॥
पश्चिमेन तु कार्पासमुत्तरेण तु वल्कजम् ॥

'रोचिष्णुरसी'त्यादर्शं दर्शयेत् ॥

नैवेद्यं चास्य दातव्यं सघृतं पायसं शुभम् ॥

'देवदेवबोध' मन्त्रेण ॥

विविधं च बलिं [6]दत्त्वा तर्पयेद्भूतजं गणम् ॥
गन्धमाल्यैश्च मन्त्रैश्च पूजयित्वा द्विजोत्तमान् ॥
शान्त्युदकं च गृह्णीयाद्ब्राह्मणेभ्यश्च कामतः ॥
चण्डेश्वराय यज्ञस्तु कर्तव्यस्तदनन्तरम् ॥
शयनासनवस्त्रैश्च पूजयेत्स्थापकं स्वयम् ।
पूजयाऽलङ्कृतं कृत्वा ततो देया च दक्षिणा ॥
इभं मदगलं दद्यादश्वं वा हेमभूषितम् ॥
ग्रामं चापि सुनिष्पन्नं येन [7]वास्तुस्पतेर्गुरुः ॥
अन्यथा क्रियमाणे[8]न पुण्यं स्थापकमाश्रयेत् ॥

---

१ पूता– क., ने., स. २ °गृह्य यथाविधि। इमास्सुमनसो दिव्याः सर्वगन्धसमन्विताः। पूता ब्रह्मपवित्रेण प्रतिगृह्णीष्व शंकर–क. ३ °र–ने, स. ४ इमं वनस्पतिरसं सर्वगन्धाढ्यमुत्तमम् –क; वानस्पति°–ने. ५ °द्यतां–क. ६ कृत्वा–ने. ७ वा तुष्यते गुरुः–स. ८ तु–क.

तव प्रसादाद्विप्रेन्द्र दुष्प्रापं प्राप्तवानहम् ॥
प्रणम्य शिरसा ब्रूयात्प्रसीदेति पुनः पुनः ॥
अधिवासनवस्त्राणि शय्या स्नानं वितानकम् ॥
कलशाश्चार्घपात्राणि सर्वाणि स्थापकस्य तु ॥
[1]प्रतिष्ठापनयेद्दत्तं यावद्दशमिका भवेत् ॥
स्थापकस्योनुमोदेन नाऽत्र कार्या विचारणा ॥
'ॐ नमो महेश्वराय स्वा[2]हा महापुरुषाय स्वाहा' ॥
इत्यनेन मन्त्रेण लिङ्गमन्त्रं जपेत् ॥
चतुर्थिकां ततः कुर्याद्विधिदृष्टेन कर्मणा ॥
पुष्पैस्तु विविधाकारैः कारयेत्पिण्डिकार्हणम् ॥
विविधं चैव कर्तव्यं भोजनं [ तत् ] दिनं प्रति ॥
एष धर्मविधिः कार्यः प्राप्ते तु दशमेऽहनि ॥
वर्द्धमानं प्रकुर्वीत मासषाण्मासिकं तथा ॥
लेपनैर्विविधाकारैः कुर्याद्वै देवपूजनम् ॥
प्रतिमास्वपि विज्ञेय एष एव विधिः सदा ॥
महाकालादि सर्वासु अर्धनारीश्वरस्य च ॥

**ईश्वर उवाच ॥**

विधानेन यथोक्तेन ये मे लिङ्गं [3]प्ररोपयेत् ॥
कल्पकोटिसहस्राणि रुद्रलोके महीय[4]ते ॥
शूरश्च [5]बहुभृत्यस्य ब्राह्मणो मत्परायणः ॥
एष एव विधिः कार्यः पुराणायतनेष्वपि ॥

**ब्रह्मोवाच ॥**

शैलेयेषु विधिः प्रोक्तो यथा भगवतस्त्वया ॥

---

१ प्रतिष्ठापने यद्दत्तं–स. २ °हा पिनाकिने स्वाहा महापु°–क. ३ प्रयोजयेत्–क. ४ °ते । तस्यान्ते पुनरावृत्तो पार्थिवो जायते महान्–क. ५ बहुभृत्यश्च–स.

सौवर्णरजतानां च वक्तुमर्हस्यशेषतः ॥

ईश्वर उवाच ॥

सौवर्णं राजतं ब्रह्मन् ताम्रं वैडूर्यमेव [१]च ॥
यथोत्पन्नानि [२]स्थानानि नात्र कालो विधीयते ॥
प्रक्षिपेत्ताम्ररत्नानां बीजा[३]नि च विशेषतः ॥
न हि रत्नेषु[४] रत्नानां प्रक्षेपो [५]दृश्यते क्वचित् ॥
धातुना येन यल्लिङ्गं कुर्याद्भक्तिपरायणः ॥
तस्य तेनैव योज्या तु पिण्डिका शुभलक्षणा ॥
मधुकं काञ्चनं देयं विपुलं फलमिच्छता ॥
आयुष्कामेण पुत्राणां कुलस्य च विवृद्धये ॥
रौप्ये च चन्दनं दत्त्वा दुःखं जयति सर्वतः ॥
रत्नानि दापयेच्छैले धीन[६] बीजं च कृत्स्नशः ॥
प्रयत्नेन[७] प्रकुर्वीत शैलजे [८]तु विशेषतः ।
[९]अथ सर्वसमं श्रेष्ठं [१०]यदा मध्यं वरप्रदम् ॥
अधस्ताद्विपुले पुत्रा उद्धृते बहवः स्त्रियः ॥
अधो वक्रे ततः पुत्रं मध्यवक्रे ततो धनम् ॥
चर्मपांशुकपालेषु [तुषभस्मा]स्थिरोमसु ॥
[११]शय्यासु विपरीतासु स्थापयेच्चाभिकारि[१२]कम् ॥
[१३]कृष्णाय सारकूपश्च पञ्चलोहमयाश्च ये ॥
[१४]खल्वेवार्चं वितिचिच्य स्थापयेद्विधिवद्विजः ॥
[१५]पातका स्थापयेत्कृष्णाष्टम्यां चतुर्दशी ॥

---

१ वा–क. २ स्थाप्यानि–क. ३ °नां च–क. ४ °न र°–क. ५ शस्यसे क्व°–क. ६ धातौ बीजानि कृत्स्नशः–क; धानो बीजं–ने; °च्छैले धीनो–स. ७ °नैव कुर्वीत–क. ८ °षु–ने; स. ९ अनुसर्वं समं श्रेष्ठं पञ्चगव्यं वरप्रदं–क. १० पदमध्यं–ने; स. ११ कायासु–क. १२ °कान्–क; °काम्–ने; चाभिचरिकम्–स. १३ कृष्णाय स्वारकृचाश्च पञ्चलोहमयाश्रये–क. १४ शस्त्रेणायं विनिक्षिप्य स्थापयेद्विधिवद्विजः–क. १५ घातकाह्यत्र स्थाप्यन्ते कृष्णष्टम्यां चतुर्दशीं–क; घातकाः-ने.

कलशानि च शक्तिश्च कर्तव्यं विप्रभोजनम् ॥
सिध्यन्ति सर्वे[1]कर्माणि विप्रा येस्तु प्रपूजिताः ॥
समिद्भीरुधिराक्ताभिः खादिरीभिर्विशेषतः ॥
[2]एवमेतानि जानीयादाभिचारिकपौष्टिकम् ॥
पुरुषास्थिकपालेषु स्थापयेन्न कदाचन ॥
शत्रवस्तेन वर्द्धन्ते द्वौ मासौ च भयं भवेत् ॥
[3]पाशं तु पुष्टिकामस्य लिङ्गं शान्तिकरं भवेत् ॥
सर्वबीजानि प्रक्षिप्य मासादूर्ध्वांश्च धारयेत् ॥
प्रमादात्तु[4] भवेत्त्रासः प्रयत्नाच्च[5] शिवं भवेत् ॥
मुखानि त्रीणि यूपस्य चतुर्थं नोपलभ्यते ॥
[6]अवोचनाभ्य(?)कर्माणि अनामानि तु यानि वै ॥
अधस्तादुपरिष्टाच्च मध्ये [7]चापि विनिर्दिशेत् ॥
स्थापको हतदोषस्तु सोपदेशः समाहितः ॥
ससुवर्णेन हस्तेन रत्नादीनि विनिक्षिपेत् ॥
वज्रं च हरितालं च व्रीहीं [8]वा माषमेव च ॥
[9]ताभ्यां विनिक्षिपेत्सम्यगेवं शान्तिः कृता भवेत् ॥

**मन्त्रः** ॥

पुरुषाणां वरः श्रीमान्सर्वदेवाधिपो महान् ॥
वज्रहस्तो महा[10]सत्त्वस्तस्मै नित्यं नमो नमः ॥
मुक्ता मन शिला[11]युक्तं ग्रामारण्यक[12]याचकान् ॥

---

१ °कार्याणि—क. २ एवमेतद्विजानीयामभिचारिकपौष्टिकान्—क. ३ पालाशं पुष्टिका°—क. ४ °दाश्भ°—क. ५ °चासवं°—क. ६ आलोचन्येन कर्णानि अनाशानि श्रुतानि वै—क. ७ वापि—क. ८ श्यामाकमेव च—क. ९ पल्यां इति मूलमातृके. १० मन्त्रस्त°—क. ११ रूक्मग्रामानायकनाथकान्—क. १२ °पात्रकान् (or) यावकान् for याचकान्—ने; °यावकान्—स.

[1]मणिन्यानिक्षिपेद्विद्वान्नवात्रा तोयं दधिः ॥

**मन्त्रः ॥**

आग्नेयः पुरुषो रक्तः सर्वदेवमयोऽव्ययः ॥
सधूम्राक्षस्त्वनाधृष्यस्तस्मै नित्यं नमो नमः ॥
मुद्गागोधुमकाश्चैव[2]....गृंजवांजनं(?)तथा ॥
[3]याम्यायामप्रमत्तोऽथ निक्षिपेदीप्सितार्थदः ॥

**मन्त्रः ॥**

याम्यां नीलोत्पलाभो यः पुरुषो घोरदण्डभृत् ॥
कर्मसाक्षी विशुद्धात्मा तस्मै नित्यं नमो नमः ॥
[4]उत्तिलोऽयं तिलाश्चैव मुसं श्यामाकमेव च ॥
[5]नैर्ऋत्यां दिशि दातव्यं सर्वसिद्धिप्रसाधकम् ॥

**मन्त्रः ॥**

वरुणः शबलो [6]विप्रः पुरुषो निम्नगाधिपः ॥
पाशहस्तो विभीतात्मा तस्मै नित्यं नमो [7]नमः ॥
गोधूमः सर्षपश्चैव चन्द्रकान्तमणिस्तथा ॥

---

१ मालक्यं निक्षिपेद्विद्वान् न चात्रो त्रोह्ययं विधिः—क; माणिन्यानि—स. २ वैडूर्याश्चाञ्जनं तथा—क.
३ याम्यग्राम्यप्रयत्नोथ निक्षिपेदीप्सितार्थिनं—क, ४ यत्तिलोऽथ तिलैश्चैव संव्यस्यामाकमैव च—क.
५ नैऋत्यां दिशि दातव्यं प्रणीनां मुखसाधनम् ।
नैऋत्यां नीलरुद्रो यः पुरुषो मितविक्रमः ॥
क्रूरकर्माकरः क्षुद्रः तस्मै नित्यं नमो नमः ।
एवं लिङ्गं यवाश्चैव काशीसं स्फाटिकं तथा ॥
वारुण्यं दिशि दातव्यं सम्यक् सिधिप्रदायकम् । क; नैऋत्यं दिशि दातव्यं समेव सिद्धिप्रसाधकम्—स. ६ विष्णुः—क.
७ नमो नमः । प्रियङ्गुत्वाथनीवारापारदं पुष्पतकम् ।
वायव्यमनिंद्ययोनिः निक्षिपेत् कामछन्दये ॥
मनुः वायव्यां श्यामचान्तायः गन्धर्ववत् ह्य हरिः ।
सर्वगः पुरुषः क्रोधः तस्मै नित्यं नमो नमः ॥
गोधूमास्सर्षपाश्चैव—क.

सौराष्ट्रिकाया[1] तिक्षिपेद्विचक्षणः (?) ॥
प्रमाणयुक्तं कुर्वीत तर्पयेद्विधिवद्द्विजान् ॥
तस्मात्सर्वप्रयत्नेन प्रमाणस्वं तु कारयेत् ॥
ईदृशे स्थापिते यूपे राजा राष्ट्रं विवर्धते ॥
एष एवंविधो यूपो मया प्रोक्तस्तवानघ ॥
एतेषामेकमाश्रित्य यथाकालं यजस्व माम् ॥
अथ स्नानविधिं चतुर्विधमनूपमम् ॥
आद्यं पाद्यं मार्जनं च तथोपमानिकं [2]परम् ॥
वासांसि कलशा देयाः कषायामृत्तिकास्तथा ॥
चतुर्विधानि चैतानि सर्वाण्येव भवन्ति हि ॥
एतैः स्नानविधिः कार्य[3] ईश्वरस्य महात्मनः ॥
लिङ्गस्य[4] प्रतिष्ठायां ब्राह्मणैर्वे[5]दपारगैः ॥
चतुर्विधं तु [6]सम्पूर्णा चातुर्मासिक आगते ॥
षाण्मासिके[7] तु कल्पान्ते वर्द्धमाने प्रजायते[8] ॥
आनुपूर्वेण कर्तव्यं क्रमेण विधिना विभो ॥
चतुर्विधं यदुक्तं हि वाद्यं तदिदमुच्यते ॥
घनं विततमानार्थं[9] चतुर्थं सुखिनं परम् ॥
चतुर्विधं चार्घपात्रमर्घाद्यं च प्रदापयेत् ॥
सौवर्णं राजतं ताम्रं चतुर्थं कांस्य[10]मुच्यते ॥
सौवर्णादीनामलाभे धातुकं परिकल्पयेत् ॥
कृत्वा [11]तु तत्र बीजानि अर्घं दद्यात्प्रजापते ॥

---

१ यां सौम्यायां विनिक्षिपेद्विचक्षणः-क. २ परां-क. ३ कार्यं-क. ४ °स्येह प्र°-क. ५ °पारगैः। सम्पूर्णे मासि चैकैव चतुर्मासिक आगते-क. ६ संपूर्णं मासि-स. ७ °के पक्षान्ते-क. ८ °ते। सौवर्णं रजतं ताम्रं-क. ९ °मानार्धं-स. १० °मेव च-क. ११ °ष्टौ-क.

आपो दधि पयो दर्भाः [1]शुक्ताः सिद्धार्थका [2]विभो ॥
यवाः कृष्णः तिला गन्धास्तण्डुलाश्चाक्षता विभो ॥
पुष्पाणि च सुगन्धीनि फलानि विविधानि च ॥
परिधूप्य गृहं दत्त्वा आपोहिष्ठामिमन्त्रितम् ॥
वारुणेन तु मन्त्रेण तत्पश्चादभिमन्त्रयेत् ॥

[3]अथ [4]चतुर्वर्णां वेदानामभिमन्त्रयेत् । 'कयानश्चित्रे'ति चाभिमन्त्रयेत् । ॐकारपूर्वाभिर्महाव्याहृतिभिरभिमन्त्र्य ब्रह्मशिलामु[5]पनयेत् । भगवतो महेश्वरस्य चार्घमिति पश्चिमं पूर्वोत्तरायां दिशि समुपनयेत् । दक्षिणतो रुद्राधिपतये नमः । तमेवार्घं प्रदक्षिणीकृत्य देवस्योपरिदापयेत् । [6]अर्घैस्तु दत्तैर्भवेत् । तथा चतुर्विधा [7]उपसानिका भवन्ति ॥ [8]तथा शुक्ला रक्ता पीता कृष्णा चेति । अथ चतुर्विधा मृत्तिकोपमानिकाश्च भवन्ति । तद्यथा ॥ पार्वती नादेयी वाल्मीका [9]कुशस्तम्भ मृत्तिकाश्चेति । कुशोदकेन प्रदक्षिणमुत्तरे विसर्जयेत् ॥

अथ चतुर्विधाःस्नेहाःस्नपने[10] भवन्ति । पञ्चगव्यं प्रथमम् । द्वितीयं [11]क्षीरम् । तृतीयं दधि । चतुर्थं [12]घृतमिति ॥ पञ्चममक्षतोदकम् । षष्ठं फलोदकम् । सप्तमं रत्नोदकम् । अष्टमं गन्धोदकम् । तत्र प्रथमं पञ्चगव्येन स्नपयेत् । पश्चादद्भिः स्नपयित्वा घृतेन स्नपयेत् । घृतेन स्नपयित्वो[13]द्वर्त्तयेत्ततो दध्ना स्नपयित्वा स्वनाम्ना स्नापयेत् । [14]काषायैरुद्वर्तयेत् ॥ चतुर्विधाः काषायाः । प्लक्षन्यग्रोध[15]मधुकशिरी[16]षाद्यैरुद्वर्त्याम्भसा स्नापयेत् । तत्र आपश्चतुर्विधा भवन्ति । तद्यथा । नद्यस्तडागाः[17] सरसरः पल्वलाश्चेति । सर्षपकषायचूर्णैनोद्वर्तयेत् । सर्वौषधिफलानि भवन्ति । तत्र चतुर्विधाः[18] सौवर्णाश्चत्वारो राजताश्चत्वार[19]स्ताम्रजाश्चत्वारः कांस्यमयाश्चत्वारः इति ॥ तत्र प्रथमे कलशे पञ्चगव्यं क्षिपेत् ।

---

१ शुक्लसिद्धार्थका विभोः–स. २ विभौ–क. ३ अथ चतुर्णामेव वेदानां आदिभिश्चाभिमन्त्रयेत्–क. ४ चतुर्णां–ने; स. ५ °पवेशयेत्–क. ६ अर्थे तु दण्डस्नपनं भवति तथा–क. ७ औपसानिका–क. ८ तद्यथा रक्ता पीता श्वेता कृष्णा चेति–क. ९ कुशस्नानमृत्तिका चेति–क; कुशस्तम्बं मृत्तिका चेति–स. १० °ने संभवन्ति–क. ११ घृतं–क. १२ क्षीरमिति–क. १३ °त्वा दध्ना स्ना°–क. १४ कषायैरुद्वर्तयेत्–क; स. १५ °मधूक–स. १६ °षा इति कषायैरुद्वर्त्याम्भसा स्नापयेत्–क. १७ °गाः सरसः पल्वलं चेति–क; नद्यास्तडागसत्सरः पल्वलाश्चेति–स. १८ °धाः कलशाः–क. १९ °म्रमयाश्चत्वारः–क; स्ताम्राजा°–स.

द्वितीये क्षीरम् । तृतीये दधि । चतुर्थे घृतम् । पञ्चमेऽक्षतोदकम् । षष्ठे फलोदकम् । सप्तमे रत्नोदकम् । अष्टमे गन्धोदकम् ॥ अवरमहतं वासो देयं स्नापयित्वा गन्धपुष्पैश्चाभ्यर्चयेत् ॥ तत्र गन्धाः ॥ तगरमुस्तकह्रीवेरागुरुतुरुष्कचन्दन[1]शरसमूहगन्धाः । अथ पुष्पाणि भवन्ति । तद्यथा ॥ [2]तिलकार्क-कुरवक-धत्तूर-करवीरोत्पल-चम्पक-पुन्नाग-नागकेसर[3]कुन्दादीनां शतसहस्रं गन्धपुष्पैश्चाभ्यर्च्य धूपग्रहणं कृत्वा निवर्त्तयेत् । तिलतण्डु[4]लदध्यक्षतैर्बलिमुपहरेत् ॥ अथ चतुर्विधानि वासांसि भवन्ति ॥ तद्यथोण्डजं वोणजं वल्कलजं लोमजमिति ॥ तत्राण्डजं कौशेयं वोणजं कार्पासिकम् वल्कलजं पट्टजं लोमजमाविकमिति ॥ तत्र मूर्तिषु अण्डजं दद्यात् ॥ [5]दक्षिणेन तिललोमजम् ॥ पश्चिमे वोणजम् ॥ देव देवेश्वराय उत्तरे वल्कलजं दद्यात् ॥ अथ चतुर्विधाश्चरवो भवन्ति ॥ तत्र पूर्वो मूर्त्यां यावकम् । दक्षिणमूर्त्यां कृशरम् । पश्चिममूर्त्यां पायसम् । उत्तरमूर्त्यां दध्योद[6]नानि ॥ एवं कृते सदा सम्पूर्ण[7] फलमाप्नोति । यत्र जायते [8]गणाधिपत्यमवाप्नोति ॥ सर्पिस्नानेनाश्वमेधं[9], गोमूत्रेण राजसूयं, गोमयेन गोमेधं, दध्ना पुण्डरीकं, [10]क्षीरेण सौत्रामणिं, दध्यु[11]दकेनातिरात्रं, वाजपेयफलं तथा ॥

अम्भसा दिवं श्रे[12]ष्ठानां क्रतूनां फलमाप्नुयात् ।
विस्तरेण मया प्रोक्तं[13] तव[14] ब्रह्मन् समन्ततः ॥
लिङ्गप्रतिष्ठापनविधौ स्नपनस्योत्तमो विधिः ॥

**तथा ॥**

लिङ्गमिष्टं प्रतिष्ठाप्य सर्वयत्नैर्विधानतः ॥
यत्पुण्यफलमाप्नोति तदेकाग्रमनाः शृणु ॥
सर्वयज्ञतपोदानतीर्थवेदेषु यत्फलम् ॥
तत्फलं कोटिगुणितं स्थाप्य लिङ्गं [15]समाप्नुयात् ॥
[16]लिङ्गं यः स्थापयेदेकं विधिपूर्वं सदक्षिणम् ॥

---

१ °रससमूहाः—क. २ तितिल°—क. ३ °कुमुदादीनां—क; कुन्दादीनां शतसहस्रगन्ध°—स. ४ °डुल—क. ५ दक्षिणमूर्तिमुलोमजं—क; दक्षिणे जतिललोमजं—स. ६ °दनमिति—क. ७ संपूर्णफल°—स. ८ गाणपत्यमवाप्नोति इति—क. ९ °धं गोमयेन स्नानेन गोमेधं गोमूत्रस्नानेन राजसूयं दधिस्नानेन—क. १० क्षीरस्नानेन सौ°—क. ११ °दकस्नानेन—क. १२ °°ष्ठान्यं ऋभूणां फल°—क. १३ °क्तः—क. १४ °त्र—क. १५ लमेन्नरः—क. १६ यो लिङ्गं—क.

सर्वमेवोदितं पुण्यं कोटिकोटिगुणं भवेत् ॥
[1]मात्रिकं पित्रिकं चैव यत्र वोवोः...कस्त्रियः (?) ॥
कुलैकविंशमुत्तार्य रुद्रलोके महीयते ॥
भुक्त्वा तु विपुलान् भोगान् प्रलये समुपस्थिते ॥
ज्ञानयोगं समासाद्य तत्रैव च विमुच्यते ॥
सर्वतीर्थमयं लिङ्गं शाङ्करं तत्त्वसागरम् ॥
दर्शनात्स्पर्शनादेव कृत्स्नमे[2]नः क्षयं नयेत् ॥
स्थापनाद्ब्रह्महत्याश्च भ्रूणहत्यां तथैव च ॥
महापापा[3]नि चान्यानि क्षणोति शिवतेजसा ॥

---

१ मातृजं पितृजं चैव यां चैवो बृहति स्त्रियं–क; मातृकं पितृकं–ने; स. २ तत् क्षयं–क.
३ °तिपापानि–क.

## अथ ब्रह्मप्रतिष्ठा ॥ १२ ॥

तत्र भविष्यपुराणे ॥

[1]अतःपरं प्रवक्ष्यामि अधिवासनमुत्तमम् ॥
यज्ञो ब्रह्ममयो ह्येष सर्वदेवनमस्कृतः ॥
प्रासाद[2]स्थापनं कुर्यात्स्थण्डिलं नातिदूरतः ॥
दशहस्तपरीणाहं चतुरस्रं समन्ततः ॥
चतुर्भिस्तोरणैर्युक्तं परिक्षिप्तं कुशैस्तथा ॥
तत्रोपरि विता[3]नांश्च दिशासु विदिशासु च ॥
ब्रह्मस्थाने तु नवमीं सदा कुर्याद्विचक्षणः ॥
नदीसङ्गमतीर्थाच्च सिकतास्तत्र दापयेत् ॥
अलङ्कृतं गन्धपुष्पैरुच्छ्रितध्वजशोभितम् ॥
अकृष्णमूलकान् कलशान्सङ्ख्यया शतसम्मितान् ॥
वस्त्रपूतेन तोयेन पूरयेच्च विचक्षणः ॥
मन्त्रपूतांस्ततः सर्वान्कुर्वीत स्थापकः शुचिः ॥

**मन्त्रः ॥**

चतुःसमुद्रज्येष्ठाये'त्यनेन मन्त्रेणाभिमन्त्रयेत् ॥ तथा ब्रह्मदैवत्य ऋग्भिश्च तत्सङ्ख्याभिरभिमन्त्रयेत् ॥

---

१ अत ऊर्ध्वं प्र°–क.   २ °दस्याग्रतः कुर्या°–क.   ३ नाढ्यं कुर्याद्दिव्यं च मण्डपं —
मन्त्रपूतस्ततः सर्वाः सर्वास्त्वर्चीकस्थापकश्शुचिः ।
मालाकुलं ध्वजमारम्यं पताकाभिश्च शोभितम् ।
कार्याश्चाष्टौ पताकासु दिशासु विदिशासु च ॥
ब्रह्मस्थाने तु–क;
तत्रोपरि वितानाद्यं कुर्याद्दव्यं विचक्षणः ।
मन्त्रपूजां ततः सर्वा कुर्वीत स्थापकश्शुचिः ॥
ध्वजमालाकुलं दिव्यं पताकाभिश्च शोभितम् ।
कार्याश्चाष्टौ पताकाश्च दिशासु विदिशासु च ॥ ने; स.

पूर्वोत्तरदिशाभागे तथान्यं मण्डपं विभो ॥
कुर्यात्कनीयसं दिव्यं ध्वजमालाकुलं शुभम् ॥
तत्रापि मण्डपे कार्याः कलशाष्टौ सुशोभनाः ॥
एवमष्टोत्तरशतं कलशानां सुशोभनम् ॥
दधिनान्वितं सर्वं रत्नगर्भं तथा विभो ॥
कृत्वाधिवासं विधिवत्ततो देवं समानयेत् ॥
कृत्वा लक्षं यदा देवमानयेदुत्तरामुखम् ॥
बाह्यमण्डपके स्थाप्य रक्षां कुर्यात्प्रयत्नतः ॥

अहं परस्तादनेन मन्त्रेण रक्षां [१]कुर्वीत

शुभपीठगतं कृत्वा स्थापयेत्तं[२] यथाविधि ॥
चतुर्वेदविदं विप्रं स्थापकं तत्र निर्दिशेत् ॥
द्वितीयो भोजकस्तद्वत्सर्वशास्त्रविशारदः ॥
बह्वृचाध्वर्यवो विप्राच्छन्दोगाथर्वणाश्च ये ॥
एषां मन्त्रेण संस्थाप्यो भगवान् पद्मसम्भवः ॥
'आपो हि ष्ठे'ति वै मन्त्रान्जपमानैर्नराधिप ॥[३]
तूर्यशङ्खनिनादैश्च गणिका नर्तकैस्तथा ॥
वेदपुण्याहशब्दैश्च नानातीर्थोदकैर्नृप ॥
उपहारैश्च विविधैर्गन्धमाल्योदकैस्तथा ॥
नदीसङ्गमदिव्यांश्च वल्मीकादाहृतांस्तथा ॥
दद्याद्देवस्य शिरसि मृत्तिकां पीत[४]वर्णिनीम् ॥
'अश्वक्रान्तेति' वै दद्यान्मन्त्रैर्मन्त्रविदां वरः ॥
[५]सर्वौषधीनामयुक्तां सदूर्वाशमिपत्रिकाम् ॥

---

१ कुर्यात्-क. २ °त्व-क; येन यथा-स. ३ मन्त्रेण यजमानैर्नराधिप-क.
४ °वर्णकां-क. ५ सर्वैषधीनाम-स.

स्थापका ब्राह्मणाः सर्वे भोजका विप्रकन्यकाः ॥
स्नापयन्ति ततो देवं विधिवद्भरतर्षभ ॥
वारुणं जपतो मन्त्रं तीर्थनामानि वा विभो ॥
अनेन विधिना स्नाप्य गृहीत्वा शङ्खमुत्तमम् ॥
[1]'शन्नो देवीति' जपन्पयसा पूरयेद्बुधः ॥
मन्त्रेणालभ्य तच्छिरस्ततो मूर्ध्नि जलं [2]क्षिपेत् ॥
'पृथिवी ते पात्र'मनेनालभ्य शिरः ।
'इदं विष्णुर्विचक्रमे'ति[3] क्षिपेज्जलम् ॥
'शन्नोदेवी'ति मन्त्रेण पुनः स्नानं प्रवर्त्तयेत् ॥
सौवर्णं पात्रं संस्कृतं घृतं गव्यं च दीयते ॥
यातयामानि वस्त्राणि अन्यदेव धृतानि च ॥
तथा वा नीलरक्तानि न द[4]द्यादाविकं-ले ॥
दद्यान्माल्यानि[5] देवेश देवदेवस्य मूर्द्धनि ॥
'श्रीश्चते लक्ष्मीश्च ते' मन्त्रेणार्घं दत्त्वा[6] नमस्कृत्य समाहितः ॥
ततस्त्वन्यन्महद्दिव्यं प्रागुक्तं मण्डपं [7]न्यसेत् ॥
दातव्या शोभना शय्या शैलेये[8]षु विशेषतः ॥
पूर्वाग्रमुत्तराग्रं वा [9]कुशैः कृत्वा तु संस्तरम् ॥
शोभनेने[10]ह वस्त्रेण समन्तात्परिवेष्टयेत् ॥
[11]सवस्त्रकुशस्तांश्चैर्दिव्यमाल्यैः प्रयोजयेत् ॥
प्रासादाभि[12]मुखो भूत्वा मन्त्रपूर्णस्वरो भवेत् ॥

---

१ 'शन्नोदेवी'ति मन्त्रेण पुनस्स्नानं प्रवर्तयेत् । सौवर्णं-ने. २ पिबेत्-क. ३ °ति निक्षिपेज्जलम्-स. ४ °द्यातांविकाप्युपे-क. ५ °नि वस्त्राणि-क. ६ °त्वा अर्चयित्वा नमस्कृत्य-क. ७ नयेत्-क; ने; स. ८ °जेषु-क. ९ कुशं कृत्वा सुसंस्तरम्-क. १० °न च-क. ११ सर्वां तां कुशशय्यां वै दिव्यमालैः प्रपूजयेत्-क; सव(स्त्रं) कुशशस्तं वै-स. १२ °मुखी भूत्वा-स.

'नमो स्वपद्भ्यो जाग्रद्भ्यश्चवो'मन्त्रेणेति ॥

पूरयित्वा तु कलशमेकं ताम्रं सुसंस्कृतम् ॥

शिरःस्थाने तु दातव्यं 'देवस्य त्वेति'भारत ॥

ताम्रपात्रं ततो देयं शिरस्थाने विशेषतः ॥

क्षीरक्षौद्रे ततो दत्त्वा मन्त्रमेतंमुदीरयेत् ॥

'अभि त्वा शूर नोनुम' इति ।

श्वेताः सुमनसो दत्त्वा धूपं दत्त्वा चतुर्दिशम् ॥

पटेन महता चैव समन्तात्परिवेष्टयेत् ॥

आत्मनो दक्षिणे पार्श्वे मन्त्रमेतमुदाहरेत् ॥

'आप्यायस्व समे तु ते विश्व'तः वृष्ण'मिति ॥

ततः सर्वप्रयत्नेन शय्यामत्र प्रवेशयेत् ॥

'बृहस्पतेच्छदिरसि'त्यनेन मन्त्रेणाऽभिमन्त्रयेत् । शय्यामिति ॥

ब्रह्मसूक्तं ततो जप्त्वा होमं शान्ति च कारयेत् ॥

'ब्रह्मसूक्तं' 'ब्रह्मजज्ञान' मित्यादि ।

शमीपलाशन्यग्रोध अश्वत्थोदुम्बर स्तथा ॥

सहस्राणि तु वै त्रीणि शान्तिं कृत्वा घटोत्कटम् ॥

महाव्याहृतिमन्त्रेण जुहुयात्स्थापको द्विजः ॥

चतुर्ष्वपि दिशास्वेवं अग्निकुण्डानि कारयेत् ॥

बह्वृचाध्वर्युछन्दोगाथर्वणाश्च द्विजोत्तमाः ॥

होमं कुर्वन्ति राजेन्द्र प्रासादस्था महीपते ॥

एवं हुत्वा तु राजेन्द्र पावकं मूर्ध्नि संस्पृशेत् ॥

कुशोदकं गृहीत्वा तु अभिमन्त्र्य विधानवित् ॥

'आपो हि ष्ठे'ति मन्त्रेण त्रिः कृत्वा प्रक्षिपेज्जलम् ॥

---

१ °तः सोमवृष्णियमिति–क; °तःसेमवृष्ण्यमिति–ने; °तः सोमवृष्ण्यमिति–स. २ °र तथा–क. ३ घृतोदकी–क. ४ एकं–ने; स.

भक्ष्यभोज्यो[1]पहारैश्च बलिं दद्यात्समाहितः ॥

[2]प्रकीर्णा अप्रकीर्णा च दातव्या देवसन्निधौ ॥

सर्वतस्तु बलिं दत्त्वा दिक्षु चैव पुनः क्षिपेत् ॥

ब्राह्मणान् भोजयित्वाऽष्टौ हविष्यं ब्रह्मचारिणः ॥

तेभ्यो विलेपनं दद्याच्चन्दनेन सुगन्धिना ॥

दक्षिणा च यथाशक्ति प्रीयतां मे पितामहः ॥

सन्तु देवाःसदा प्रीताःसिद्धाश्चैव सचारणाः ॥

गन्धर्वाप्सरसः सर्वे गणा विद्याधरास्तथा ॥

सप्तर्षयो वालखिल्या देवा देवर्षयस्तथा ॥

नीलरुद्रान् जपेत्तत्र ब्रह्मसूक्तं तथैव च ॥

अथर्वशिरसं चैव सर्वोत्पातप्रशान्तये ॥

[3]श्लोकाध्यायं तु रुद्रियं [4]ब्राह्मणमैत्रेण मैत्रं चाध्वर्युर्दक्षिणे ज[5]पेत् ।

देवव्रतं पौरुषं च ज्येष्ठं सामरथन्तरम् ॥

वामदेव्यं तथा सूक्तं छन्दोगः पश्चिमे जपेत् ॥

स्थापकोऽपि ततः साध्यं विकर्णं दुष्टशान्तये ॥

जपतस्तस्य विप्रस्य न दोषः स्थापने भवेत् ॥

गायनैर्नर्तकैश्चैव तत्र कुर्यान्महोत्सवम् ॥

देवस्य पुरतः कार्यं पुण्यं पुस्तकवाचनम् ॥

ब्रह्मघोषस्तु कर्तव्यो दिशासु विदिशासु च ॥

बह्वृचादि द्विजैः सर्वराक्षसासुरशान्तये ॥

अहोरात्रं त्रिरात्रं वा एवमेवाधिवासयेत् ॥

अधिवासनं तु विधिवत् कृत्वा वै ब्रह्मणो नृप ॥

---

१ °पचारैश्च—क. २ अप्रकीर्णा च दातव्या देवदेवस्य सन्निधौ—क. ३ रुद्रान्पुरुषसूक्तं च श्लोकाध्यायं...द्रिमं—क. ४ ब्राह्मणमैत्रमैन्द्रञ्च अर्धार्धं दक्षिणे जपेत्—क. ५ °पेत् । गायनैर्नर्तकैश्चैव—क.

अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥
कृत्वाऽधिवासनं देवे एवं भक्त्या विचक्षणः ॥
कृत्वाग्निकार्यं विधिवत्ततो ब्राह्मणभोजनम् ॥
ब्राह्मणान् भोजयित्वा तु [1]दिव्यं तौशाश्च(?) शक्तितः ॥
देवं प्रति ततो गच्छेद्ब्राह्मणैः सह भारत ॥
गृहीत्वा देवदेवेशं ततो देवालयं विशेत् ॥
शङ्खपूर्णनिनादैश्च गीतशब्दैश्च पुष्कलैः ॥
पुण्याह[2]शब्दघोषैश्च मङ्गलानाञ्च निस्वनैः ॥
ज्ञात्वा प्रमाणं देवस्य पिण्डिकश्वभ्रमाचरेत् ॥
पक्वाभिरिष्टिकाभिश्च श्वभ्रं बध्नीत वै शुभम् ॥
द्वारवेधं न कुर्वीत चतुरस्रं समन्ततः ॥
कुशोदकेन पूतेन गोमूत्रेण च शोधयेत् ॥
शोधयित्वा यथान्यायं गोमयेनोपलेपयेत् ॥
अक्लिन्नेन सुपक्केन नवतण्डु[3]लयेन वै ॥
'[4]गोरो यः पुरुषः सौम्यः सर्वौषधिमयोऽमृतः ॥
नक्षत्राधिपतिः सोमस्तस्मै नित्यं नमो नमः' ॥

अनेन मन्त्रेण लेपयेदिति ॥

सर्वबीजानि गन्धांश्च रोचनं काञ्चनं शुभम् ॥
पद्मरागेण संयुक्तं ब्रह्मस्थाने निवेशयेत् ॥

**मन्त्रश्चात्र भवति ॥**

पद्मयोनिश्चतुर्मूर्तिर्वेदवासाः पितामहः ॥
यज्ञरक्षः च [वै नित्यं[5]] तस्मै नित्यं नमो नमः ॥

---

१ दिव्याभौमाश्च शक्तितः–क; दिव्यं तैसाश्च–स. २ °ब्रह्मघोषैश्च–स. ३ °लजेन च–क.
४ गौरायः–क. ५ blank after रक्षः and before स तस्मै in स also.

न बीजगाढं कुर्वीत मङ्गलार्थन्तु दापयेत् ॥
ऐन्द्राग्नेयदिशोर्मध्ये काञ्चनं च प्रदापयेत् ॥
आग्नेयीयाम्ययोर्मध्ये दद्या[1]दुपलकं मणिम् ॥
[2]मध्यञ्च याम्यनैर्ऋत्योः प्रवालं तु प्रदापयेत् ॥
मध्ये नैर्ऋतवारुण्यो [वीर][3] ताम्रं विनिर्दिशेत् ॥
वायुवारुणयोर्मध्ये मौक्तिकं तु प्रदापयेत् ॥
सौम्यवारुणयोर्मध्ये मणिश्च विमल[4]स्स्मृतः ॥
सौम्येशानयोर्मध्ये दद्याच्चन्दनपूर्वकम् ॥
[5]न संस्कारेण दातव्यो मन्त्रस्तत्र न विद्यते ॥
यदि नस्याद्यथोक्तं तु मणिरत्नं यथादिशम् ॥
सुवर्णं तत्र दातव्यं विदुषा सिद्धिमिच्छता ॥

**मन्त्राश्चात्र भवन्ति ।**

[6]विश्वेदेवेभ्यः गन्धर्वेभ्यो नमः ॥ प्रजापतये नमः ॥

'ब्रह्मजज्ञान'मिति ध्वजमभिमन्त्रयेत् । पट्टेन महता समन्तात्परिवेष्टयेत् ॥

सुरक्षितं तु कर्तव्यं विघ्नान्यत्र भवन्ति हि ॥
ततस्तु स्थापयेद्देवं मन्त्रतो नलिनोद्भ[7]वम् ॥

**मन्त्रः ॥**

'उत्तिष्ठ ब्रह्मणस्पते' ॥

[8]स्नापनं तु प्रकुर्वीत विधिदृष्टेन कर्मणा ॥
पुनरन्यानि वासांसि दद्यात्प्रयतमानसः ॥
देवं [9]तु यन्त्रितं कृत्वा रज्जुभिश्च यथाविधि ॥
ब्राह्मणैः शुचिभिर्वृद्धैः सर्वशास्त्रविशारदैः ॥

---

१ °दुप्तलं मणिं—क. २ अन्तरेजास्यनिऋत्यौ—क; मध्ये च याम्य°—ने; स. ३ gap in स—[ ]. ४ °शुभः-क. ५ नमस्कारेण दातव्यो—ने; स. ६ विश्वेभ्यो देवेभ्यः-स; विश्वेभ्यो देवेभ्यो नमः—क. ७ °वम् । उत्तिष्ठ—क. ८ स्नपनम्—स. ९ संयन्त्रितं—क.

प्रदक्षिणं ततः कृत्वा देवदेवं प्रवेशयेत् ॥
पुण्याहजयशब्दैश्च ब्रह्मघोषैश्च पुष्कलैः ॥
द्वारस्थाने तु देवस्य अर्घं दत्त्वा समाहितः ॥
प्रवेशयेत्ततः क्षिप्रं [1]मन्त्रश्चैनमुदाहरेत् ॥

'विश्वं[2] प्रविशती'ति ॥

ब्रह्मपीठे ततो न्यस्य पुनः सूत्राणि [3]मोक्षयेत् ॥
[4]प्राशयेत मधुना च मध्यं देवस्य लेपयेत् ॥

'मधुव्वाता'इत्यनेन मन्त्रेण ॥

निमित्तमशुभं दृष्ट्वा कश्चित्कालं विधारयेत् ॥
आवाहयेत्ततो देवमर्घं दत्त्वा समाहितः ॥
आगच्छ भगवन् ब्रह्मन् लोकानुग्रहकारणात् ॥
इदमासनं सुरश्रेष्ठनिर्मितं विश्वकर्मणा ॥

स्थिरो भव विश्वा भत्र ध्रुवाद्यसमयमिति प्रतिष्ठापयेत् ॥
'ध्रुवा द्यौर्ध्रुवा इमे पर्वता, ध्रुवो यज्ञो, यजमानो ध्रुवो, राजा ध्रुवं, विश्वमिति नमो नमः ॥

इति प्रतिष्ठापनमन्त्रः ॥

अर्घेण पूजयेद्देवं अर्घं [5]शृणुत भारत ॥
आपः क्षीरं कुशाग्राणि अक्षतादधितण्डुलाः ॥
तिलाः सिद्धार्थकाश्चैव अष्टाङ्गोऽर्घः प्रकीर्तितः[6] ॥
पञ्चगव्यं दधिक्षीरं सर्पिषा सह भारत ॥
गन्धोदकं गन्धवारिकुशोदकफलोदकम् ॥
उपहा[7]राम्रनिभाश्चाऽत्र पूरयेत विचक्षणः ॥
संहिताः[8] कारयेन्मन्त्रैः सर्वानेत्र समाहितः ॥

---

१ मन्त्रं चैव–क. २ प्रभवतीति–क; प्रविशवतीति–ने. ३ लक्षयेत्–क. ४ पायसेन च मधुना मध्ये देव लोपयेत्–क. ५ च शृणु–क. ६ °तम्–ने. ७ °रमिमाश्चात्र–क; त्रयहाराम्रनिभा°-ने. ८ °तान्–क.

'आगच्छागच्छ भगवन् सुरश्रेष्ठ [1]सवेद, सपत्नीक,[2] पाद्यं[3] दत्त्वागतं भवते'ति ॥ पितामहाय नलिनयोनये नमः ॥ 'इमा आपः शिवाः शिवतमाः ॥ शान्ताः शान्तत[4]मा' इत्यनेन मन्त्रेणार्घं दद्यात् ॥ 'नमस्ते तु [5]महामाये'ति हिं[5]. सीः शिवो नमः सुमना भव' इति पञ्चगव्यमन्त्रः ॥ 'तेजोसि शुक्रमसी'त्याज्यमन्त्रः ॥

मधुव्वाता इत्येवमादि ॥ सावित्र्या क्षीरमभिमन्त्रयेत् ॥
उपमानिकैः कषायैः देवस्योद्वर्त्तनं स्मृतम् ॥
'हिर[6]ण्य'इत्येवमादि उपमानिका[7]मन्त्रः ॥
स्थापयेन्निष्प्रकम्पन्तु निःशब्दं निश्चलं तथा ॥
स्वस्थाने देवदेवेशं सुरश्रेष्ठं चतुर्मुखम् ॥
स्थाप्यमानो यदा देवो नमते कम्पतेऽपि वा ॥
तदा शान्तिस्तु कर्तव्या पौष्टिकी नाभिचारिकीम् ॥
यदा तु चल[8]ते देव ऐन्द्रीं च दिशमाश्रितः ॥
वारुणीं कारयेच्छान्तिं दद्याद्विप्राय वास[9]सी ॥
यदा तु चलते ब्रह्मा वायव्यां दिशमाश्रितः ॥
वायव्यां कारयेच्छान्तिं दद्याद्दुग्धं द्विजातये ॥
यदा तु चलते ब्रह्मा सौम्यां च दिशमाश्रितः ॥

---

१ सरेदद:-क. २ °कः परिषदः स्वागतं भगवते विरिंचि पितामहाय-क. ३ दत्वागतं भगवता इति-स. ४ °मा अमृता अमृततमा इत्यनेन-क. ५ मा महिंसीः इति शिवोनस्सुमना-क; मामाहिंसीः चिवाजः सुमना भवेति-ने; स. ६ °ण्यगर्भ इत्येव-क. ७ °न्त्राः-क. ८ देवो नमते कम्पतेऽपि वा ।

तदा शान्तिस्तु कर्तव्या पौष्टिकी नाभिचारिकी ।
यदा तु चलते देव ऐन्द्रीं च दिशमाश्रितः ॥ ने.

९ सी...कारयेच्छन्तिं दद्याद्विप्राय गोवृषः ।
यदा तु चलते ब्रह्मा वायव्याग्नेयीदिशमाश्रितः ॥
वायवीग्नेयीं कारयेच्छान्तिं हिरण्यं ब्रह्मणे स्मृतम् ।
यदा तु चलते देवो नैऋत्यां दिशमाश्रितः ॥
राक्षसीं कारयेच्छान्तिं छागीं दद्याद्विजोत्तमे ।
यदा च चलते देवो वारुणीं दिशमाश्रितः ।
वारुणीं कारयेच्छान्तिं दद्याद्दिप्ताय वाससी ॥ क.

सौम्यां च कारयेच्छान्तिं धेनुं दद्याद्द्विजातये ॥
यदा तु चलते देव ऐशानीं दिशमाश्रितः ॥
तदा रौद्री भवेच्छान्तीरुक्तं दद्याद्विजातिषु ॥
यस्यां यस्यां चलेद्देवस्तस्याः शान्तिविदुर्बुधाः ॥
नाधोदृष्टिं नोर्ध्वदृष्टिं तिर्यग्दृष्टिं च कारयेत् ॥
प्रतिष्ठाप्य यथान्यायं सुरश्रेष्ठं महीपते ॥
[१]स्नापनं कारयेद्भूमौ विधिदृष्टेन कर्मणा ॥

'शन्नो देवीरभिष्टये'त्येवमादि ॥

शान्त्युदकं च कर्तव्यं हुत्वाग्नौ विधिवद्विजैः ॥

'[२]आशु[शुः] शिषा[शा]नो वृषभ'इत्येवमादि ॥

तैजसान्यर्घपात्राणि मृन्मयं तु न कारयेत् ॥
सौवर्णं च भवेत्सर्वं रौप्यं ताम्रमथापि वा ॥
अन्यथा क्रियमाणे च विपरीतफलं [३]भवेत् ॥
'सुस्नातं'ति द्विजाः ब्रूयुः सर्वे च व्रतिनस्ततः ॥
गन्धपुष्पाणि देवस्य धूपो देयस्तथैव च ॥
दीपं प्रज्वाल्य मन्त्रेण नामकिञ्चिदुदाहरेत् ॥
इमे गन्धाः शुभाः शीताः सूक्ष्माः सुरभिगन्धिनः ॥
पूता ब्रह्मपवित्रेण प्रतिगृह्याण यथाविधि ॥
इमाः सुमनसो देव्यः सर्वगन्धविभूषिताः ॥
पूता ब्रह्मपवित्रेण [४]प्रतिगृह्याण पितामह ॥
अयं वनस्पतिरसो दिव्य[५]गन्धाढ्य उत्तमः ॥
आहारः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

---

१ स्नपनम्–स. २ 'आशु शिषाणो'–स. ३ लभेत्–ने; स. ४ प्रतिगृह्ण–स.
५ °गन्धाप्य–स.

अग्निर्ज्योतिश्च शुक्रश्च स्नेहपूर्वो विभावसुः ॥
प्रभाकरो महातेजा दीपोऽयं प्रतिगृह्यताम् ॥
ततश्चतुर्विधैर्वस्त्रैर्युग्मबद्धैः प्रपूजयेत् ॥
पूर्वेण पट्टजं दद्याद्रोमजं दक्षिणेन तु ॥
पश्चिमेन तु कार्पासमुत्तरेण तु वल्कजम् ॥

'रोचिष्णुरसी'त्यादर्शं दर्शयति ।

नैवेद्यं तस्य दातव्यं सघृतं पायसं शुभम् ॥
'देवस्यत्वे'ति मन्त्रेण, अथवा 'देव[1]त्वाये'तिमन्त्रेणेति ॥
विविधं च बलिं कृत्वा तर्पयेद्भूतनायक[2]म् ॥
गन्धमाल्यैश्च मन्त्रैश्च पूजयित्वा द्विजोत्तम[3] ॥
शान्त्युदकं गृहीत्वा तु स्नपयेत्पूजयेद्ग्रहान् ॥
शयनासनवस्त्रैश्च पूजयेत्स्थापकं ततः ॥
युक्तं षोडशभिर्विप्रैर्भोजकेन च भारत ॥
पूजयालङ्कृतं कृत्वा ततो देया च दक्षिणा ॥
इभं मदगलं दद्या[4]त्प्रासादं वा सुभूषितम् ॥
ग्रामं [5]चापि सुनिष्पन्नं येन तुष्यति ते गुरुः ॥
तव प्रसादाद्विपेन्द्र दुष्प्रापं प्राप्तवानहम् ॥
प्रणम्य शिरसा ब्रूयात्प्रसीदेति पुनः पुनः ॥
अधिवासनवस्त्राणि शय्या छत्रं वितानकम् ॥
कलशाश्चार्घपात्राणि सर्वाणि स्थापकस्य[6] हि ॥
[7]प्रतिष्ठापयेच्च सद्वृत्तं न यावद्दशमिका भवेत् ॥
स्थापकस्यानुमोदेन नाऽत्र कार्या विचारणा ॥

---

१ °त्रायेति–क. २ °कान्–क. ३ °मान्–क; ने; स. ४ अश्वं वा हेमभूषितम्–क. ५ वापि–क. ६ तु–क. ७ प्रतिष्ठापने यद्वृत्तं यावद्दशमिका भवेत्–क.

य एवं विधिना कुर्यात्प्रतिष्ठां ब्रह्मणो नरः ॥
स सर्वगुणसम्पन्नो याति ब्रह्मसदो नृप ॥
'ॐनमः [1]सुरासुर यथा स्वाहा पितामहाय स्वा[2]हा' ॥
इत्यनेन मन्त्रेण देवमभ्यञ्जयेत् ॥
चतुर्थिकां ततः कुर्याद्विधिदृष्टेन कर्मणा ॥
विविधं च [3]यथा कुर्य्यात् ब्राह्मणानां च तर्पणम् ॥
एष एव विधिः कार्यः प्राप्ते च दशमेऽहनि ॥
वर्द्धमानानि [4]कुम्भानि मासषण्मासकानि च ॥
इदं च परमं गुह्यं ब्रह्मणो वचनं शृणु ॥
विधानेन [5]यदुक्तेन यो मे मूर्तिं प्ररोप[6]येत् ॥
कल्पकोटिसहस्राणि मम लोके महीयते ॥
तत्स्थाने पुनरावृत्तः पार्थिवो जायते महान् ॥
[7]एष एवंविधो कार्यः पुराणायतनेष्वपि ॥
इति ते कथितो राजन् प्रतिष्ठादि[8]विधिक्रमः ॥
ब्रह्मणोऽयं नरः कृत्वा मुच्यते ब्रह्महत्यया ॥

---

१ सुरश्रेष्ठाय स्वाहा—क. २ °हा । महापुरुषाय स्वाहा इत्यनेन—क; स. ३ ततः कु°—क. ४ कुर्वीत मासाषाण्मासकानि च—क. ५ यथोक्तेन यो मे मूर्तिं प्रदापयेत्—क. ६ °येत् । एष एव विधिः कार्यः—ने. ७ एष एवं विधिः कार्यः—क; स. ८ °विधिरुत्तमः—क.

# अथ विष्णुप्रतिष्ठा[1] ॥ १३ ॥

[तत्र] भविष्यपुराणे—

**सुमन्तुरुवाच ॥**

अधिवासनं शृणु विभोर्विष्णोरमिततेजसः ॥
प्रासादान्नातिदूरे तु कुर्यान्मण्डपमग्रतः ॥
दशद्वादशहस्तं वा परिक्षि[2]प्तं समन्ततः ॥
चतुर्भिस्तोरणैर्युक्तं पुण्यदामोपशोभि[3]तम् ॥
प्लक्षोदुम्बरमश्वत्थवटं पूर्वादितः क्रमात् ॥
हस्तं प्रावेशयेद्भूमौ दृश्यं हस्तचतुष्टयम् ॥
सूपलिप्ते सुसंमृष्टे चतुस्तोरणसंयुते ॥
स्थण्डिलस्योपरिक्षिप्तं समन्तादुपशोभितम् ॥
नदीतीरमृदायुक्ते वालुकायां च कारिते ॥
अकालान्कलशानष्टौ तेषु द्वारेषु स्थापयेत् ॥

'अकालान्' अकृष्णान् ॥

आम्रपल्लवसंछन्नान् फलपुष्पैरलङ्कृतान् ॥
अहतैर्युगलैर्वस्त्रैर्ग्रीवायां तु निवेशितैः ॥
चन्दनोदकतोयेन पूरयित्वा यथाक्रमम् ॥
दी[4]समालापरिक्षिप्तपताकाभिरलङ्कृतम् ॥
गायनैर्नर्तकैश्चैव [5]वादित्रैर्विविधैः शुभैः ॥
पताकाश्चैव वक्ष्यामि दिशासु विदिशासु च ॥

---

१ °ष्टा भवि°–क. २ °प्य स°–क. ३ °तम् नदीतीरमृदायुक्तैः–क. ४ °पमाला°–क. ५ वापितैः–क.

पूर्वेणेन्द्रायुधा[1]कारामनले लोहितां तथा ॥
कृष्णां चैव तु याम्यायां नैर्ऋत्यां च तथैव च ॥
इन्द्रगोपनिभाकारां वारुण्यां [2]चैव दीपयेत् ॥
शिरीषपुष्पप्रतिमां वायव्यां [3]सन्निवेशयेत् ॥
कौबेर्यां पीतवर्णां तु ऐशान्यां पाण्डु[4]रा भवेत् ॥
मध्ये तु जलदाकारां पताकामुच्छ्रयेत्सदा ॥
एताः [5]सर्वाः समुच्छ्रित्य धूपदीपादिकं क्रमात् ॥
स्वेन स्वेन तु मन्त्रेण दिशां देवान् क्षमापयेत् ॥
[6]ऊर्ध्वस्तु सर्वदेवांस्तु [7]ब्रह्माद्यांस्तु क्षमापयेत् ॥
त्रिरात्रमेकरात्रं वा पञ्चषड्वाधिवास[8]येत् ॥
ततो विष्णुं [9]समासीनं सुधौतं सुपरीक्षितम् ॥
शिल्पिनः पूजयेत्पश्चाद्वस्त्रालङ्करणादिभिः ॥
अन्ये च पूजनीयाश्च ये चाऽत्र परिचारकाः ॥
प्रस्तरे तु ततः शय्यां दिव्यास्तरणसंयुताम् ॥
आचार्यो[10]मूर्तिपैश्चैव ऋत्विग्भिः सह संयुतः[11] ॥
[12]विष्णुवृत्तधरैः शान्तैर्विष्णुशास्त्रानुरञ्जितैः ॥
अलोलुपैरहीनाङ्गैरार्यदेशसमुद्भवैः ॥

---

१ °कार्यां आग्नेय्यामाशु सन्निभा–इन्द्रायुधाकारा नीललोहितपीता–क. २ वै प्रदीप°–क. ३ विनिवेशयेत्–क. ४ रां तथा–क. ५ सर्वान्–स. ६ ऊर्ध्वं तु–स. ७ ब्रह्मा यांस्तु–स.

८ °येत् । एवं सुशोभनं कृत्वा मण्डपं तु सुतोरणम् ।
तस्यैव चोत्तरे पार्श्वे कर्तव्यः स्नानमण्डपः ॥
सुशोभनं च कर्तव्यं स्थण्डिलं वल्किरामयम् ।
ततो विष्णुं समानीय–क.

९ समानीय–नें; स. १० मूर्तिपश्चैव–स ११ °तैः–क. १२ विष्णुव्रतधरैः–स.

विष्णुभक्तिपरैर्धीरैर्विप्रै[1]र्भावयुतैः सह ॥
द्वात्रिंशद्भिः षोडशभिरष्टाभिस्तु क्रमेण तु ॥
अनायित्वा तु देवेशं स्नपयेत्स्नान[2]मण्डले ॥
स्नपनं तु ततः कार्यं दिव्यमङ्गलवादितम् ॥
यथानुरूपैर्विविधैर्वादित्रनिनदैः शुभैः ॥
कषायैः पञ्चगव्येन तीर्थवल्मीकमृज्जलैः ॥
समुद्रज्येष्ठा सलिलस्य मध्या या आपो दिव्या उत वा स्रवन्ति ॥
यासां राजा वरुणो याति मध्ये यासु राजा न वरुणो यासु [3]सोमे ॥

इत्येताभिः ऋग्भिः स्नपयेत् ॥

अर्घं दत्त्वा नमस्कृत्य अर्चयित्वा यथाक्रमम् ॥

'या दिव्या आपः यशसा' इत्यनेन मन्त्रेणेति ॥

दत्त्वा तु गुग्गुलं धूपं देवदेवस्य धीमतः ॥

प्रच्छाद्य वस्त्रयुग्मेन 'युवं वस्त्राणी'त्यनेन मन्त्रेण ततःकार्यं तु लक्षणम् ॥

उत्थापयेत्ततो देवं मन्त्रेणानेन सुव्र[4]तः ॥
'उत्तिष्ठ ब्रह्मणस्पते रथे [5]तिष्ठन्नयति
वाजिन'इत्यनेन मन्त्रेण रथमारोपये[6]त्प्रभुम् ॥
शङ्खदुन्दुभिनिर्घोषैः पताकाभिरलङ्कृतम् ॥
आरोप्य सदृशे याने आनयेत्तोरणान्तिकम् ॥
'उदुत्यं जातवेदसम्' ॥ 'आकृष्णेन रजसे'ति च ॥
[7]प्रवेशयेत्ततो देवं स्थापक[8] प्रयतः शुचिः ॥
ततश्च प्रस्तरेच्छय्यां स्थापकः 'शं निवेशयेत् ॥
प्रागग्रैर्दर्भवंशैस्तु राजन् दिव्यजलैः शुभैः ॥

---

१ °भागवतैस्सह–क. २ °मण्डपे–ने; स. ३ सोमो–स. ४ °त–क; ने.
५ तिष्ठन्नयति–स. ६ °च्छुभम्–क. ७ आवेशयेत्ततो–क. ८ संशितव्रतः–स.

उपरिष्टाच्च शय्याया देयं प्रस्तरणं शुभम् ॥
दुकूलं पट्टसंच्छत्रं कार्या सं[1]वात्यसम्भवे ॥
प्रदक्षिणं ततः कुर्यात्स्थापकः प्रयतः शुचिः ॥
प्राङ्मुखं तु ततः कृत्वा भद्रपीठे [2]सुसंस्थितम् ॥
पूरयित्वाम्भसा विप्र कलशं चाप्यलङ्कृतम् ॥
सपुष्पं साक्षतं कृत्वा शिरोदेशे तु दापयेत् ॥
'आपो देवी'ति मन्त्रेण मातरः [3]सुधयन्तु च ॥
ततः [4]शिरोत्तरोभूय उपधानसमन्विते ॥
शयने कारयेद्देवं विधिदृष्टेन कर्मणा ॥
मधुना सर्पिषाभ्यञ्ज्य दद्यात्सिद्धार्थकान्शुभान् ॥
स्थित्वैव दक्षिणे पार्श्वे म[5]न्त्रं वै समुदाहरेत् ॥
'आप्यायस्वे'ति मन्त्रेण 'या ते रुद्र शिवे'ति च ॥
सर्वाङ्गं च समालभ्य दद्यात्पुष्पं नराधिप ॥
श्वेतान् प्रतिशरान् दद्यान्मन्त्रेणानेन साधिप ॥
'बृहस्पतये त्वा मह्यं' मन्त्रेण परिवेष्टयेत् ॥
दुकूलपट्टकार्पासैस्तथा [6]वल्कलरोमजैः ॥
चित्रं पट्टविचित्रैश्च च्छादये[7]त समन्ततः ॥
चामरं व्यजनं छत्रं वितानं च सुशोभनम् ॥
दर्पणः पार्श्वतः स्थाप्यो रत्नान्योषधयस्तथा ॥
गृहोपकरणैश्चान्यैः समन्तात्परिवारयेत् ॥
'अभि त्वा शूर नो नुम' इत्यनेनैव क्षीरं क्षौद्रं घृतं तथा ॥
मन्त्रमेतं समुच्चार्य पादस्थाने [8]निवेशयेत् ॥

---

१ °चाप्यसं°–ने; स. २ तु–ने; स. ३ संधयन्तु च–स. ४ शिरोसमे भूय–स.
५ °न्तमेतमुदाहं–क. ६ वल्कजरोमभिः–स. ७ °च्चस–क. ८ निवेदयेत्–स.

भक्ष्यभोज्यान्नपानैश्च षड्विधैश्च विशेषतः ॥
[1]सर्वतस्तु बलिं कृत्वा मण्डपं च सुशोभनम् ॥
प्रकीर्णा अप्रकीर्णाश्च दातव्यो देवसन्निधौ ॥

'प्रकीर्णं ओदनादि प्रकीर्य यो बलिर्दीयते स 'प्रकीर्ण':, एवमप्रकीर्य दीयत इत्यप्रकीर्णः ॥ 'त्र्यम्बकं यजामहे' इत्यनेन मन्त्रेण सर्वमेतद्धिकारयेत् ॥

मूर्तिमान् स्थापयेत्पश्चाद्दिशासु विदिशासु च ॥
श्रीसूक्तं पावमानं च [2]वाम्यं दाम्यं च वाजिनः ॥
वृषाकपिं च मैत्रं च बह्वृचः पश्चिमे जपेत् ॥
देवव्रतं पुरुषगतिं ज्येष्ठसामरथन्तरम् ॥
भारुण्डानि च सामानि वामदेव्यं तथैव च ॥
उत्तरां दिशमास्थाय छन्दोगस्तु [3]जपेत्तदा ॥
रुद्रा[4]य पुरुषसूक्तं च श्लोकाध्यायं [5]च शुक्रियम् ॥
[6]ब्राह्मणमन्त्रेण मैत्रेय अध्वर्युः पूर्वतो जपेत् ॥
अथर्वाङ्गिरसं चैव [7]शिवसूक्तं तथैव च ॥
नीलरुद्रं चैव मन्त्रमथर्वा दक्षिणो जपेत् ॥
विष्णुकल्पं परिषदं पञ्चरात्रांशगामिनम् ॥
स्तोत्रं मन्त्रविदश्चात्र पठेयुर्दक्षिणे सदा ॥
शिरःस्थाने तु कृष्णस्य आचार्यो होममाचरेत् ॥
शान्तिकैः पौष्टिकै[8]श्चापि मन्त्रैर्व्याहृति[9]भिस्तथा ॥
पलाशो दुम्बराश्वत्थमपामार्गशमीस्तथा ॥
सहस्रमेकं हुत्वा च विष्णुपादौ स्पृशेत्ततः ॥
द्वितीयं तु ततो हुत्वा समिद्भिस्ताभिरेव तु ॥

---

१ समन्तात् पूरयेत्तत्र मण्डपं वै सुशोभनम्–क. २ तस्यां दास्यां च वाजिनः–क. ३ जपेत्सदा इति–मूलमातृका ४ °न् पु°–क. ५ स शु°–क; स. ६ ब्राह्मणं मित्रमित्रं च–क; ब्राह्मणमैत्रणं मैकं च–स. ७ शुक्तसू°–क. ८ °श्चैव–क. ९ °कैरत°–क.

मध्ये तु [1]संस्पृशेद्देवं मूर्ध्नि चैव क्रमेण तु ॥
[2]होमाय प्रयताः सर्वे मूर्तिमांश्च दिशःश्रिताः ॥
अनन्तादि शिवान्ताश्च अष्टौ ये चक्रवर्तिनः ॥
तेषां [3]मन्त्रास्तुहोतव्याः [4]जुहुयाच्च यथाक्रमम् ॥
शान्तितोयघटं गृह्य सम्पा[5]ताहुतिहुतं तदा ॥
तेन पादौ तु देवस्य शिरः प्रक्षाल्य यत्नतः ॥
स्थितं च [6]स्नापयेत्तेन सम्पाताहुतिवारिणा ॥
पुनः प्रच्छादये[7]च्चापि धूपं दद्यात्सगुग्गुलम् ॥
निवेदनं हविष्यान्नं तथा मोदकसंयुतम् ॥
ब्राह्मणान् पूजयेत् [8]पूर्वं शेषानन्यांस्तुकामतः ॥
रात्रौ महोत्सवः कार्यः शङ्खभेर्यादि निःस्वनैः ॥
गायनैर्नर्तकैश्चैव ब्रह्मघोषैस्तथैव च ॥
पुरतो वैष्णवा[9]न्धर्मोच्छ्रावयेद्वाचक[10]स्तथा ॥
त्रिरात्रमेकरात्रं वा कुर्या[11]द्देवाधिवासनम् ॥
इति तेऽधिवासनविधिः कथितः[12] अधिपेश्वर ॥
अधिवास्य ततो विष्णुं शुभ्रं कुर्यात्समन्ततः ॥
प्रासादस्यानुरूपेण प्रतिमायाश्च भारत ॥
प्रासादं प्रोक्ष्य सर्वत्र मन्त्रपूतेन वारिणा ॥
[13]पातयेत्पक्षसूत्राणि द्वारसूत्रं तथैव च ॥
ततो मध्यसमं[14]गृह्यं कर्तव्यं स्थिरमादरात् ॥
कुर्यात्सूत्रं प्रमाणेन कृष्णस्याद्भुतकर्मणः ॥

---

१ संस्पशेदेवं–स. २ होमाय प्रस्नातः सर्वे मूर्तियाः स्वदिशः श्रिताः–स. ३ मन्त्रश्च–क. ४ जप्तव्याश्च–क. ५ °ताद्याहुतं तथा–क. ६ स्थाप°–क. ७ °च्चैव–क. ८ पूर्वान्–क. ९ °वं धर्म°–क; °वान् धर्मोच्छ्रवसेद्धारकस्तथा–स. १० °सदा–क. ११ °त्त्रा°–क; कुर्याद्गुद्राधि°–स. १२ °तेक्ष्माधिपेश्वर–क, १३ पातयेत् पकसूत्राणि–स, १४ गृह्य इति–मूलमातृका

[1]श्वभ्राधस्तान्न्यसेत्पूर्वं शिलां ब्रह्मात्मिकां शुभाम् ।

ततश्चोत्थापयेद्देवं मन्त्रेणानेन क्ष्माधिप ॥

'उत्तिष्ठ ब्रह्मणस्पते' इत्यनेन[2] पुण्याहब्रह्मघोषैश्च शङ्खभेर्यादिनिःस्वनैः ॥

रथं चालङ्कृतं कृत्वा तस्मिंश्चारोपयेच्छनैः[3] ॥

'रथेतिष्ठन्नयति वाजिन' इत्यनेन मन्त्रेण रथस्थं कारयेद्धरिम् ॥

ग्रामं वा नगरं वापि शनैः कुर्यात्प्रदक्षिणाम् ॥

पुष्पैर्गन्धैस्तथान्नाद्यैः शकटं पूरयेच्छुभम ॥

शङ्खभेरीनिनादैश्च पताकाभिर्ध्वजैस्तथा ॥

चामरैश्च वितानैश्च कलशैः पद्मशोभितम् ॥

दीपदर्पणसंयुक्तैर्दीपमङ्गलनादितैः[4] ॥

बलिं प्रक्षिप्यमाणस्तु शनैर्गच्छेत् प्रदक्षिणम् ॥

आनीय मण्डपं पश्चादर्घपाद्यं च दापयेत् ॥

तस्मिन्मुहूर्तं विश्राम्य रत्नन्यासं तु कारयेत् ॥

सर्वबीजानि धातुंश्च रत्नान्योषधयस्तथा ।

काञ्चनं पद्मरागं च पारदेन समन्वितम् ॥

पद्मं कूर्मश्च पृथिवी गरुडश्चानुपूर्वशः ॥

ब्रह्मस्थाने तु दातव्या मन्त्रपूता यथाविधि ॥

[5]बीजगाढं प्रकुर्वीत समूलांस्तान् प्रदीपयेत् ॥

बीजगाढे महादोषो व्याधिदोषभयं भवेत् ॥

बीजकानां त्वलाभे तु स्वर्णं सर्वत्र विन्यसेत् ॥

[6]अतःपरं रत्नं न्यासस्य मन्त्रा भवन्ति ते ।

ॐ इन्द्रस्तु महसादीप्तः सर्वदेवाधिपो महान्[7] ॥

दम्भोलिहस्तः [8]सत्त्वास्त्वस्तस्मै नित्यं नमो नमः ॥

---

१ श्वभ्राध्वस्तान्-स. २ °न ब्रह्मघोषै घाशैश्चपुक्षणैः । पुण्याह जयशब्दैश्च शंखभेर्यादिनिस्वनैः-क. ३ °शनैः-क. ४ °वादिभिः-क. ५ बीजगाढ न कुर्वीत-क. ६ अतः परं त रत्नन्यासस्य मन्त्रा भवन्ति-स. ७ °दीपाधिपो महान् धर्मसाक्षी विशुद्धात्मा-क. ८ स त्वाध्वस्तस्मै-स.

आग्नेयः पुरुषो दीप्तः सर्वदेवमयोऽव्ययः ॥
धूम[1]केतुनराधृष्यः तस्मै नित्यं नमो नमः ॥
ॐ यमश्चोत्पलवर्णाभः पुरुषो दण्डधृक् महान् ॥
धर्मसाक्षी विशुद्धात्मा तस्मै नित्यं नमो नमः ॥
नैर्ऋत्यां पुरुषः कृष्णः सर्वरक्षोऽधिपो महान् ॥
खड्गहस्तो महासत्त्वस्तस्मै नित्यं नमो नमः ॥
ॐ वरुणः प्रबलो विष्णुः पुरुषो निम्नगाधिपः ॥
पाशहस्तो महात्मा च तस्मै नित्यं नमो नमः ॥
ॐ वायुर्वै श्यामवर्णोऽयं सर्वगन्धवहः शुचिः ॥
पुरुषो ध्वजहस्तस्तु तस्मै नित्यं नमो नमः ॥
ॐ आयम्तु पुरुषः सौम्य सर्वौषधिसमन्वितः ॥
नक्षत्राधिपतिः सोमस्तस्मै नित्यं नमो नमः ॥
ॐ ईशानः पुरुषः शुक्लः सर्वविद्याधि[2]पस्तथा ॥
शूलहस्तो विरूपाक्षस्तस्मै नित्यं नमो नमः ॥
पद्मयोनिश्चतुर्मूर्तिर्वेदव्यासः पितामहः ॥
[3]यज्ञरक्षश्च सततं तस्मै नित्यं नमो नमः ॥
रत्नन्यासे कृते पश्चात्पायसेनोपलेपयेत् ॥
पट्टेन महता पश्चाच्छुक्लेन परिछादयेत् ॥
वेदी भगवतो मेरुः सौवर्णिः सा च कीर्तिता ॥
सुव[4]र्णपृथिवी चैव राजतौ तत्र कारयेत् ॥
अष्टमङ्गलकं नाम लोहपङ्कविनिर्मितम् ॥
[5]पद्मश्चैव तु कूर्मश्च कार्यौ शुक्लमयौ शुभौ ॥

---

१ सूपकेतुरनाधृष्यः—स. २ °पो महान्—क. ३ यक्षरक्षेश्च सततं—ने. ४ °र्णं—क. ५ पयश्चै°-क.

एतेषामेवमेकं तु [1]मध्यद्रव्यमुदाहृतम् ॥
न्यासश्चैव यथा[2]लाभं हीनवित्तस्तु मानवः ॥
अञ्जनं मधुकं चैव अक्ष[3]ता मेरुणा सह ॥
ब्रह्मस्थाने तु [4]न्यस्तव्या षडेते च यथाक्रमम् ॥
क्षीरवृक्षत्वचं पुष्पमष्टमं गुडपायसम् ॥
श्रीकामस्तु न्यसेत्सम्यक् देशवृद्धिकरं शुभम् ॥
काञ्चनं घृतगोधूमान् दूर्वा रोचनया सह ॥
गोशृङ्ग[5]मृत्तिकांश्चैव [6]कूर्मेण सह निक्षिपेत् ॥
स्थितस्य [7]तस्य देवस्य श्रिया वृद्धिः सदा भवेत् ॥
कृशरां काञ्चनं चैव पद्मेन सह विन्यसेत् ॥
स्थितस्य तस्य देवस्य [8]चातुर्वर्ण्यहितं भवेत् ।
चतुष्पा[9]दाश्च वर्धन्ते न च सस्यं विनश्यति ॥
लाजा मधु घृतं चैव शमी चाश्वत्थमेव च ॥
वेद्यां च सह दातव्यं यज्ञोत्सवकरं तथा ॥
[10]मूर्तिकां पर्वतस्याथ [11]ह्लदा दीपस्तथैव च ॥
सदा क्रमेण दातव्यं राष्ट्रवृद्धिकरं नृप ॥
काञ्चनं सर्वबीजानि मेदिन्या सह विन्यसेत् ॥
स्थितस्य [12]तत्र वै तस्य प्रजा प्रमुदिता भवेत् ॥
चन्दनं सर्वबीजानि मेरुणा सह विन्यसेत् ॥
स्थितस्य तत्र कृष्णस्य प्रजा राजा च वर्द्धते ॥

---

१ अन्यद्रव्यसमायुतम्–क. २ °न्यासं–क. ३ °तो-क. ४ दातव्या षडेते–क. ५ °मृत्तिकां चैव कूर्मेण–स. ६ क्रमेण सह–क. ७ तत्र देवस्य–स. ८ चातुर्वर्ण्यं हितं–स. ९ °दाश्च वर्ध°–क. १० मूर्तिकां पर्वताग्राच्च रजतं यव एव च–क. ११ ह्लादादायस्तथैव च–स. १२ तस्य वै तत्र–क.

ब्रह्मस्थाने तु विन्यस्य सर्वकामार्थदं शुभम् ॥
न भयं नैव दुर्भिक्षं [1]पञ्चद्रव्ये व्यवस्थितम् ॥
श्वभ्रस्य दक्षिणे पार्श्वे सर्षपान् जुहुयाद्बुधः ॥
[2]अग्नये ब्रह्मणे चैव श्रीरुद्राय च विष्णवे ॥
स्कन्दाय गणराजाय गणमातृभ्य एव च ॥
इन्द्रा[3]द्याँल्लोकपालांश्च आदित्यांश्च वसूंस्तथा ॥
विश्वेदेवास्तथा [4]सर्वा स्वनाम्ना चोपलक्षितान् ॥
[5]ॐकाराद्यान्नमोन्ताश्च कृत्वो[6]त्थाप्य बलिं हरेत् ॥
उत्थितं तत्र देवेशं वालरज्वा हि दण्डवत् ॥
ततः सुयन्त्रितं कृत्वा ब्राह्मणान् स्वस्तिवाच्य च ॥
जीवदानं ततो दत्त्वा देवदेवं समुत्क्षिपेत् ॥
स्थापकः स्थापयेद्देवं मूर्तिपैर्बलवत्तरैः ॥
पुण्याहजयशब्दैश्च ब्रह्मघोषैश्च पुष्कलैः ॥
आचार्यश्चाग्रतो गच्छेदर्घहस्तः समाहितः ॥
पृष्ठतो यजमानस्तु भक्त्या देवं तु संस्पृशेत् ॥
पुत्र[7]मात्रकलत्रैश्च बन्धुभिः परिवेष्टितः ॥
सर्वेऽन्योन्यस्य[8]संलग्ना ध्यायमाना जनार्दनम् ॥
द्वारदेशे समानीय अर्घं तस्मै निवेदयेत् ॥
ततः प्रवेशयेद्देवं न द्रुतं न विलम्बितम् ॥
तिर्यगूर्ध्वमधश्चैवमस्पृशं तं प्रवेशयेत् ॥
विष्णुं पीठेन्यसेत्पश्चादर्घं दत्त्वा समाहितः ॥

---

१ एवं द्रव्यव्यवस्थिते–क. २ आग्नये ब्रह्मणश्चैव रुद्राय च सविष्टरे–क. ३ °न्द्राद्यालो°–क.
४ सर्वान्-क; सर्वांश्च नाम्नालोपलक्षितात्–स. ५ ॐ कारायन्तमोन्ताश्च–स ६ °त्थाय बलिं–क.
७ °भ्रातृक°–क, ने; स. ८ संभग्ना(ग्ना?)–स.

कपिला क्षीरसंसिद्धपरमान्नं सुसंस्कृतम् ॥

कपिलाज्येन संमिश्रं तेन [1]श्वभ्रं तु लेपयेत् ॥

'सरस्वती प्रति[2]दिशतु' इत्यनेन मन्त्रेण[3] सर्वासु विन्यसेत् ॥

[4]गन्धं पुष्पार्घधूपैश्च पूजयेत्सुसमाहितः ॥

पश्चादावाहनं कुर्याद्देवदेवस्य शार्ङ्गिणः ॥

ध्यात्वा परमसद्भावं चतुर्बाहुं चतुर्भुजम् ॥

तत्र सन्ध्याय चित्तं तु निश्चलं कुरुनन्दन ॥

आवाहनं[5] तु कुर्वीत स्तुतिभिर्मन्त्रसंयुतः[6] ॥

ॐ आगच्छ भगवन्ननुग्रहाय जनार्दन ॥

शाश्व[7]तं पूजां गृह्णातु भगवान्मन्त्रपूतमिदमर्घ्यं पाद्यमाचमनीयं चैव तदासनं ब्रह्मणा-विहितं स्वयम् ॥ 'ॐ ध्रुवा द्यौ ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगा'दिति । अनेन मन्त्रेण मतिमान्[8] आसनं स्थापयेत् ॥ 'असंभ्रम'द्रु[9]तं विलम्बितम् ॥

पुण्याहजयशब्दैश्च ब्रह्मघोषैश्च पुष्कलैः ॥

शङ्खभेरिनिनादैश्च गीतवादित्रनिःस्वनैः ॥

स्थितमात्रं सुवर्णेन [10]स्थापयेदथ सर्पिषा ॥

तस्यान्ते स्थापये[11]त्तेन सम्पाताहुति[12]चारिणा ॥

अर्घं दत्त्वा नमस्कृत्य अर्चयित्वा यथाविधि ॥

सघृतं गुग्गुलं दग्ध्वा निःशब्दं कारयेत्ततः ॥

ऐशाने तु दिशाभागे स्थितः तूष्णीं सुसंयुतः ॥

उच्चारयेन्महामन्त्रं द्वादशाक्षरमद्भुतम् ॥

---

१ सुभ्रं तु कारयेत्—क. २ °दिशन्तु—क. ३ °ण निर्वह सर्वासु यासु विन्यसेत्—क. ४ गन्धपुष्पा°—क. ५ °नं प्रकुर्वीत—क. ६ °तै—क. ७ °तः पूजां गृह्णातु तस्मै नित्यं नमो नमः । ओं स्वागतं भगवतः सगणाय प्रतिगृह्णतु भगवान् मन्त्रपूत°—क. ८ °न् स्थापयेत्—क. ९ °तं न विल°—क; स. १० स्नापयेदथ—स. ११ °तत्र—क. १२ °कारिणा - क.

तेन वै [1]जायमानेन विधिना[2]च्छिद्रता भवेत् ॥
मन्त्रहीनो विधियैश्च अङ्गहीनश्च यो भवेत् ॥
हीनो वै दक्षिणाभिस्तु न प्रशस्तः कदाचन ॥
एष गुह्यो विधिः प्रोक्तो [3]सर्वथा वै मया तव ॥
अधुना वैदिकं वक्ष्ये विधिं सामान्य[4]वेदितम् ॥
'यज्जाग्रतो दूरमुदैत'मिति ॥ [5]'येन कर्माण्यपसो मनीषिणो यज्ञे'ति ॥
'यत्प्रज्ञानमुतचेतो धृति'श्चेति ॥ 'येनेदं भूतं भुवनं भविष्यत्' ॥
[6]'यस्मिन्नृचः सामयजुꣳ षि ॥ सुषारथिरश्वानिव ॥
एताभिर्ऋग्भिः षड्भिर्विष्णुं सर्वत्र संस्पृशेत् ॥
दक्षिणा[7]पश्चिमा चैव उत्तरा पूर्वमेव च ॥
मूर्ध्निमूलेन यत्नेन संस्पृशेत्प्रयतो बुधः ॥
'मधुव्वाता ऋते'त्यनेन मन्त्रेणअभ्यङ्गं प्रथमेऽहनि ॥
पाटनं सर्वरोगाणां सर्वं नाशाय मे[8] प्रभो ॥
हरिद्रासर्षपैश्चैव द्वितीयेऽहनि लेपयेत् ॥
पित्तरोगभयं चैव न भवेत्तु कदाचन ॥
तण्डुलेन यवैश्चैव[9] तृतीयेऽहनि लेपयेत् ॥
शिरोर्त्तिमक्षिरोगञ्च कर्णशूलं च नाशयेत् ॥
मनश्शिलां प्रियङ्गुञ्च चतुर्थेऽहनि लेपयेत् ॥
सौभाग्यं येन सततं यजमानश्च वर्द्धते ॥
कृष्णाजिनं तिलांश्चैव पञ्चमेऽहनि लेपयेत् ॥

---

१ जप्यमानेन–क; स. २ 'धिरुच्छित्रता भवेत्–क. ३ सहितो यो मयानघ–क. ४ °योगतः–क. ५ येन कर्मास्यपसो मनीषिणो यजेति–स. ६ यस्मिन् सुषारथिश्चानिवयन् मनुष्या इत्येताभि ऋग्भिः–क. ७ °णां पश्चिमां चैव उत्तरा° पूर्वं–क; °णां पश्चिमां–ने. ८ विभो–क. ९ °व पञ्चमेऽहनि शायेत् । शिरोर्त्तिमक्षिरोगं च कर्णमूलं च नाशयेत् । मनश्शिलां प्रियंगुं च चतुर्थेऽहनि लेपयेत् । सोभाग्यं येन°–क.

पितरस्तस्य तृप्यन्ति यावज्जीवं सुखप्रदाः ॥
सुरभिचन्दनं चैव सघृतं पद्मकेसरम् ॥
षष्ठेऽहनि च दातव्यं शत्रुदोषविनाशनम् ॥
रोचनां नागपुष्पं च सप्तमेऽहनि दापयेत् ॥

[1]"केसरं"नागकेसरम् ॥

क्षेमं गोर्बहुलं चापि सुभिक्षं च भवेत्सदा ॥
एवं सप्ताहमभ्यङ्गं कापिलेन घृतेन [2]तु ॥
दद्याद्विभवतः शक्त्या [3]यदीच्छेच्छ्रियमात्मनः ॥
दीपा घृतेन दातव्याश्चत्वारश्च प्रदक्षिणम् ॥
सप्ताहं मन्त्रयुक्ताश्च विभवेन ततः परम् ॥
स्थितं न चालयेद्देवं कदाचिदपि पण्डितः ॥
हन्याद्विचालितो[4]ज्ञानात्तस्मात्तं न विचालयेत् ॥
यां यां दिशं चलेद्देवस्तां तां शान्तिं तु कारयेत् ॥
अन्यथा हि भवेद्घोरं भयं राष्ट्रविनाशनम् ॥
यथा न चलते देवस्तथा बध्नीत पिण्डिकाम् ॥
शीघ्रमेव तु कर्तव्यं [5]मा विलम्बेत्कदाचन ॥
प्रतिमां सुस्थितां कुर्यान्नोर्ध्वां[6]दृष्टिं कदाचन[7] ॥
अन्यथा हि भवेद्घोरं भयं लोकविनाशनम् ॥
नाऽधोदृष्टिं प्रकुर्वीत तिर्यग्दृष्टिं कदाचन ॥
त्रिरात्रं सप्तरात्रं वा दशरात्रमथापि वा ॥
पुण्याहजयशब्दैश्च कुर्याद्देवमहोत्सवम् ॥
स्नपनं सततं कुर्यात्तच्च संक्षेपेतः श्रुणु ॥

---

१ नागपुष्पं नागकेसरं—क २ च—क ३ य इच्छे°—क. ४ ग्रामं—क.
५ न विल –क; स. ६ °नोर्ध्वदृ°—क; ने; स. ७ °न । नरो दृष्टिं प्रकुर्वीत—क.

अर्घं[8] चापि समासेन शृणुष्वावहितोऽधुना ॥
आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा ॥
यवाः सिद्धार्थकाश्चैव अर्घोऽष्टाङ्गः प्रकीर्तितः ॥

'अक्षताः' अत्र अखण्डतण्डुलाः ॥

पञ्चगव्यं दधिक्षीरं तथा मधु घृतं नृप ॥
रत्नवारिकुशाम्भश्च फलं गन्धोदकं तथा ॥
उपस्नानैः कषायैश्च दिव्यौषधिभिरेव च ॥
वल्मीकात्पर्वताग्राच्च सरस्तीर्था[1]द्व्रजाद्गजात् ॥
अग्न्यागारात्तु गृह्णीयादष्टमात्तु चतुष्पथात् ॥
'उद्धृतासी'ति मन्त्रेण मृदया तु समालभेत् ॥
उपमा[2]नकैस्तु प्रथमं मन्त्रेणानेन लेपयेत् ॥
'शन्नो देवीरभिष्टये'ति उपमानकमन्त्राः ॥
स्नानमन्त्रां[3]स्तथा चान्यान्प्रवक्ष्यामि महीपते ॥
गायत्र्या चैव गोमूत्रं 'गन्धद्वारे'ति गोमयम् ॥
'आप्यायस्वे'ति च क्षीरं दधि[4]क्राव्णे'ति [5]च दधि ॥
'तेजोऽसि शुक्र'मित्याज्यं 'देवस्य त्वा' कुशोदकम् ॥
एभि[6]स्तु पञ्चभिर्मन्त्रैः प्रथमं स्नपयेद्धरिम् ॥
द्वितीये च 'दधिक्राव्णा' दध्ना स्नानं समाचरेत् ॥
'आप्यायस्वे'ति मन्त्रेण क्षीरेण स्नापयेद्बुधः ॥
तेजोऽसीति'ततःपश्चा[7]द्घृतेन स्नानमाचरेत्[8] ॥
[9]तदन्ते मधुना स्नानं 'मधुव्वाता ऋतायते' ॥

---

१ व्रजात्हुतात्-स. २ °नैस्तु प्रथमं-क; °नकैः सुप्रथमं-स. ३ ततश्चान्या-स. ४ °क्राव्णेति वै-स. ५ वै-क. ६ °स्युः पञ्चभि°-क. ७ °द्घृते-क; पश्चाद्धिरण्याख्येति मन्त्रयेत्-ने; स. ८ °चरेत् । कुशाम्भसा ततः स्नानं-स. ९ तदन्तेन मधुस्नानं देवस्येत्वेति मन्त्रतः । कुशोदकैस्ततः स्नानं-क.

[1]ततो वारि ततः पश्चा'द्धिरण्यास्त्येति'मन्त्रयेत् ॥
कुशाम्भसा ततः स्नानं 'देवस्य त्वे'ति [2]मन्त्रयेत् ॥
[3]फलोदकैस्ततः स्नानं 'अग्न आयाहि वीतये' ॥
दद्यात्तु गन्धतोयानि सावित्र्यात्वभिमन्त्रयेत् ॥
महास्नानं ततः कुर्याद्द्रव्यस्नानादनन्तरम् ॥
कलशानां सहस्रेण कुर्यात्पञ्चशतेन वा ॥
[4]अथवाध्यर्धमर्धेन तथा चाष्टशतेन वा ॥
चतुःषष्ट्या तदर्द्धेन षोडशैरष्टभिस्तथा ॥
यथा लाभं यथा कालं यथा विभवमात्मनः ॥
अकालमूलैः कलशैः सुपक्कैः सुदृढैर्नवैः ॥
राजतैस्ताम्रसौवर्णैः [5]कांस्यपैत्तलपार्थिवैः ॥
'बला चातिबला' चैव शङ्खपुष्पी सुवर्चला ॥
सहदेवी च सिंही च वा[6]यव्याघ्री तथैव च ॥
ओषधीनां गणेनैवं स्नापयेद्देव [7]सुव्रतम् ॥
इत्येवं [8]स्नापयित्वा तु पश्चादर्घं प्रदापयेत् ॥
'आशुः शिशाने'ति ऋचा अर्घं दद्यात्प्रयत्नतः ॥
ततः पूजां प्रकुर्वीत संहितोक्तां तु मन्त्रवित् ॥
चन्दनागुरुकर्पूरकुङ्कुमाद्यैश्च लेपयेत् ॥
'नारायणे'ति मन्त्रेण वस्त्रैर्धूपैश्च [9]योजयेत् ॥
एवं सुपूजितं कृत्वा देवदेवं जनार्दनम् ॥
प्रणम्य दण्डवद्भूमौ शनैर्गच्छेत्प्रदक्षिणम् ॥
पुनराग[10]त्य पुरतो विज्ञाप्येन जनार्दनम् ॥

---

१ तेजोऽसीति ततः पश्चात्—स. २ मन्त्रतः—क. ३ कुशोदकैः—क. ४ अथवा द्व्यर्धमर्धेन—स. ५ कांस्यं वै—क; कांस्यं रैवत्वातिकपार्थिवैः ?—स. ६ °वचांव्याघ्री तथैव च—ने; स. ७ मच्युतं—क. ८ स्नपयित्वा—क. ९ पूजयेत्—क. १० °म्य—क.

सुकृतं दुष्कृतं वापि ज्ञानतोऽज्ञानतोऽपि वा ॥
तत्सर्वमात्मना सार्द्धं मया तुभ्यं निवेदितम् ॥
ततः सम्पूजयेद्भक्त्या स्थापकं विविधैर्नृप ॥
भूमिदानादिभिर्दानैर्गोदानैश्च महीपते ॥
[1]यथा सुतुष्यते राजन् तथा [2]कार्यं प्रयत्नतः ॥
यथा शक्त्यानुरूपेण पूज्याश्चापि द्विजातयः ॥
[3]दीनान्धकृपणानां च पूजा कार्या प्रयत्नतः ॥
गायनान्नर्तकांश्चैव यथाशक्ति प्रपूजयेत् ॥
रात्रौ महोत्सवं कुर्याच्छङ्खभेर्यादिनिःस्वनैः ॥
एकरात्रं त्रिरात्रं वा सप्तरात्रमथापि वा ॥
[4]तस्माद्विष्णो सदो याति इत्येषा फलसम्पदा ॥

[5]**नृसिंहपुराणे**---

[6]**मार्कण्डेय उवाच ॥**

प्रतिष्ठाविधिं देवस्य विष्णोरमिततेजसः ॥
प्रवक्ष्यामि यथाशास्त्रं शृणु भूपाल पुण्यदम् ॥
प्रतिष्ठां कर्तुं यो वाऽत्र विष्णोरिच्छति पार्थिव ॥
स [7] पूर्वस्थिरनक्षत्रे भूमिशोधनमाचरेत् ॥
खात्वा पुरुषमात्रं तु बाहु[8]मात्रं विशेषतः ॥
पूरयेच्छुद्धमृद्भिस्तु [9]जलाक्तैः शर्करान्वितैः ॥
अधिष्ठानं ततो बध्वा पाषाणेष्टकमृन्मयम् ॥
प्रासादं कारयेत्तत्र वास्तुविद्या [10]विदां नृणाम् ॥

१ यथा स तुष्यते राजन् स. २ कुर्यात्प्रयत्नतः–क. ३ दीनानां कृपणानां च–क. ४ तस्मिन्विष्णुसदो–क; तस्माद्विष्णुं सदो–ने; स. ५. नरसिंहपुराणे–स. ६ ५६, अध्यायारम्भः प्रतिष्ठाया विधिं विष्णोर्देवदेवस्य चक्रिणः–मु. पु. ७ स पूर्वं स्थिरनक्षत्रे–स; मु. पु. ८ [0]द्वय-मथापि वा–मु. पु. ९ तत्राक्तैः–ने. १० विदा नृप–मु. पु.

चतुरस्रं सूत्रमार्गे चतुष्कोणं समं शुभम् ॥
शिलाभित्तिकमुत्कृष्टं तदलाभेष्टकामयम् ॥
[1]तदभावे तु मृत्कुड्यं पूर्वद्वारं सुशोभनम् ॥
जातिकाष्ठमयैः स्तम्भैः तल्लग्नफलकान्वितैः ॥
[2]उत्तरे वनभागे च [3]पातितैश्चात्र शिल्पिभिः ॥
[4]निच्छिद्रैश्च तदा काष्ठफलकैश्च महादृढैः ॥
[5]आक्रान्तं दारुवटकैः सर्वतः परिलम्बकैः ॥
क्रकचदारितदारूणि संस्थाप्योपरि कीलयेत् ॥
आयसैरतितीक्ष्णैश्च कीलयित्वा तु कीलकैः ॥
मृन्मयैर्लोष्टफलकैः [6]सक्तैरुपरि सर्वतः ॥
छादयेद्वर्षपानीयं [7]बाह्यैः पतति वै यथा ॥
इत्थं तत्कारयित्वा तु हरेर्वेश्म सुशोभनम् ॥
पूर्वद्वारं नृपश्रेष्ठ [8]सकपाटं सुचित्रितम् ॥
अतिवृद्धातिबालैस्तु कारयेन्नाकृतिं हरेः ॥
कुष्ठाद्युपहतैर्वापि अन्यैर्वा दीर्घरो[9]गिभिः ॥
विश्वकर्मोक्तशास्त्रे तु निपुणेन च शिल्पिना ॥
कारयेत्प्रतिमां दिव्यां पुष्टाङ्गेन तु धीमता ॥
सौम्याननां सुश्रवणां सुनासां च सुलोचनाम् ॥
[10]सुकिरीटकमूर्द्धानां पश्चिमे जटिलां शुभाम् ॥
नाऽधोदृष्टिं नोर्ध्वदृष्टिं तिर्यग्दृष्टिं न कारयेत् ॥
कारयेत्समदृष्टिं तु पद्मपत्रायतेक्षणाम् ॥

---

१ मृत्कुण्डं तदभावे च चतुर्द्वारं सुशोभनं—क. २ उत्पलैः पद्मपत्रैश्च पातितैश्चित्रशिल्पिभिः—मु. पु. ३ पतितैश्चात्र—स. ४ निच्छिद्रदारुणा चैव फलकैश्च महा°—क; [ ] कोष्ठान्तर्गतभागः—मु पु. न दृश्यते. ५ आक्रान्त दारुघटकैः—स. ६ शुभ्रैरुपरि—क. ७ बाह्ये—स. ८ सकवाटं—मु. पु. ९ °रागिभिः—ने; स. १० अयमर्धश्लोकः—मु. पु. नास्ति.

सुभ्रुवं सुललाटां च सुकपोलां समां शुभाम् ॥
[1]चार्वोष्ठीं सुचिबुकां च सुग्रीवां कारयेद्बुधः ॥
उपबाहुकरे [2]देयं दक्षिणे चक्रमर्कवत् ॥
[3]नातिसंलग्नदिव्यारं [4]परितो नेमिसंयुतम्[5] ॥
वामपार्श्वे ह्युपभुजे देयं शङ्खं शशिप्रभम् ॥
पाञ्चजन्यमिति ख्यातं दैत्यदर्पहरस्वनम् ॥
हाराचितोदरां दिव्यां कण्ठे त्रिवलिसंयुताम् ॥
सुस्तनीं[6] चारुहृदयां [7]सुजठरां समाकृतिम् ॥
कटिलग्नवामकरां पद्मालङ्कृतदक्षिणाम् ॥
केयूरबाहुकां दिव्यां सुनाभिवलिभङ्गिकाम् ॥
सुकटिं [8]सूरुजङ्घां च वस्त्रमेखल[9]संयुताम् ॥
कटिपार्श्वे तु विस्तीर्णां क्लृप्तवस्त्रां सुशोभनाम् ॥
सुजानुं लक्षणोपेतां पादयुग्मेन सुस्थिताम् ॥
पद्मोपरि सुविन्यस्तदिव्यपादां सुलक्षणाम् ॥
वामपार्श्वे गदोपेतां सर्वावयव[10]संयुताम् ॥
सुवर्णवस्त्रदानेन तत्कर्तॄन् पूज्यसत्तमः ॥
पूर्वपक्षे शुभे काले [11]स्थिरे चोर्ध्वमुखेऽपि वा ॥
प्रासादस्याग्रतः कृत्वा यागमण्डपमुत्तमम् ॥
[12]चतुर्द्वारं चतुर्दिक्षु चतुर्भिस्तोरणैर्युतम् ॥

---

१ बिम्बोष्ठीं सुष्ठु चिबुकां–मु. पु. २ °देयं–क; ने; स; मु. पु. ३ नाभिसं°–मु. पु. ४ परतो–क. ५ °तम्। सुस्तनां चारुहृदयां–क. ६ °नां–ने. ७ सूदरां सुसमां शुभां–क. ८ सुरजंघां–क; सूरुजंघा च–ने; स.; सुकटीं च सुजङ्घोरुं–मु. पु. ९ °भूषितां–क; °मेखल भूषिताम्। एवं तां कारयित्वा तु प्रतिमां राजसत्तमः। सुवर्ण वस्त्रदानेन–मु. पु. १० सुन्दरां एवं तां कारयित्वा तु प्रतिमां राजसत्तम। सुवर्णवस्त्रदानेन–क; ने.; °संयुताम्। एवं तां कारयित्वा प्रतिमां राजसत्तम। सुवर्ण°–स. ११ प्रतिमां स्थापयेद्बुधः–मु. पु. १२ चतुर्द्वारि–मु. पु.

सप्तधान्याङ्कुरैर्युक्तं शङ्खभेरीनिनादितम् ॥
प्रतिमां[1] क्षालयेद्वाद्ये [2]विंशत्या तां घटोदकैः ॥
[3]प्रवेश्य मण्डपे तस्मिन् ब्राह्मणैर्वेदपारगैः ।
तत्रस्थां स्नापयेत्पश्चात्पञ्चगव्यैः पृथक् पृथक् ॥
ततोष्णवारिणा स्नाप्य पुनः [4]शीतोदकेन च ।
[5]हरिकुङ्कुमाभ्यां तु चन्दनैश्चोपलेपयेत् ॥
पुष्पमाल्यैरलङ्कृत्य वस्त्रैराच्छाद्य तां पुनः ॥
पुण्याहं तत्र कृत्वा तु [6]श्वभिस्तां प्रोक्ष्य वारिभिः ॥
नीत्वा तां ब्राह्मणैर्युक्तैः शङ्खभेरीस्वनैर्युताम् ॥
वासयेत्सप्तरात्रं तु त्रिरात्रं वा नदीजले ॥
ह्रदे तु विमले शुद्धे तडागे वा सुरक्षिते ॥
अधिवास्य जले देवमेवं पार्थिवपुङ्गव[7] ॥
तत उत्थाप्य विप्रैस्तु स्नाप्यालङ्कृत्य पूर्ववत् ॥
ततो भेरीनिनादैश्च वेदघोषैस्तु केशवम् ॥
आनीय मण्डपे शुद्धे पद्माकारविलेखिते ॥
कृत्वा तत्र पुनः स्नाप्य विष्णु[8]सूक्तैरलङ्क्रियात् ॥
ब्राह्मणान्भोजयित्वा तु विधिवत्षोडशर्त्वि[9]जान् ।
चतुर्भिरध्ययनं कुर्याच्चतुर्भिः [10]पारणं तथा ॥
चतुर्भिस्तु चतुर्दिक्षु होमः कार्यो विचक्षणैः ॥
पुष्पाक्षतान्नमिश्रेण दशदिक्षु बलिं नृप ।
एकेन दापयेत्तेषामिन्द्रादिः प्रीयतामि[11]ति ॥
प्रत्येकं सायं सन्ध्यायां मध्यरात्रे तथोषसि ।

१ °मां प्रक्षाल्य तद्वास्तु विंशत्या तां घटोदकः—क. २ षट्त्रिंशद्भिर्घटोदकैः—मु. पु. ३ प्रविश्य—क; मु. पु. ४ शान्तोदकेन च—क ५ हरिद्रकुम्भमाश्यां तु—क; हरिद्रा°—ने; ने; स; मु. पु; ६ श्रविभस्तां—मु. पु. ७ °वः—क. ८ °भक्तैः—मु. पु; विष्णुसूक्तैरलंकरेत्—स. ९ °जः—क; १० पालनं—मु. पु. ११ °मिति । जपेत्पुरुष—ने; स.

उदिते च ततो दद्यान्मातृविघ्नगणाय च ॥
जपेत्पुरुषसूक्तं तु एक[1]स्तत्र पुनःपुनः ॥
एकाग्रमनसा राजन् विष्णोर्मन्दिरमध्यगः ॥
अहोरात्रोषितो भूत्वा यजमानो द्विजैः सह ॥
प्रवेश्य प्रतिमां द्वारे शुभे लग्ने विचक्षणैः ॥
[2]पाणिपट्टे शुभे राजंस्तस्मिंस्तु स्थाप्य केशवम् ॥
'[3]ध्रुवं सूक्तं'तथोच्चार्य आचार्यः स्थापयेद्दृढम् ॥
संस्थाप्य 'विष्णुसूक्तेन' 'पाव[4]मान्ये'न वा पुनः ॥
प्रोक्षयेद्देवदेवेशमाचार्यः कुशवारिणा ॥
तदग्रे चाग्निमाधाय सम्परिस्तीर्य यत्नतः ॥
जुहुयाज्जातकर्मादि 'गायत्र्या' 'वैष्णवे'न च ॥
चतुर्भिराज्याहुतिभिरेकामेकां क्रियां प्रति ॥
आचार्यस्तु स्वयं कुर्याद्[5]ष्टबन्धं च कारयेत् ॥
'त्रातारमिन्द्र'मैन्द्र्यां तु [6]कुर्याद्विधाः पुरोऽनुगः ॥
[7]'परेयिवांसं'याम्यां तु वारुण्या'मिमं मे'ति च ॥
[8]'यत्ते सोमेति'सौम्यां तु [9]हूयादाज्यं चरुं नृप ॥
'[10]शन्नो मात्रे'ति सूक्ताभ्यां [11]सर्वंऽयाहुतिभिर्नृप ॥
हुत्वा जपेच्च विधिवद्यदस्येति च स्विष्टकृत् ॥
ततश्च दक्षिणां दद्यादृत्विग्भिश्च यथार्हतः ॥
वस्त्रे द्वे कुण्डले चैव गुरवे चाङ्गुलीयकम् ॥
यजमान[12]स्थितो दद्याद्विभवे गां [13]च कांचनम् ॥

---

१ °तस्तु मु. पु.  २ मणिपर्णे शुभे राजन्–क; This line is not found in मु. पु.  ३ देवसूक्तं–मु. पु.  ४ °नेन वा पुनः–क.  ५ °छस्त्रबंधं–ने; स; °दस्त्रं–मु. पु.  ६ कुर्यादाज्यप्रणुन्नकम्–मु. पु.  ७ परेयुवांसं याम्यं तु–क.  ८ याते सोम°–मु. पु.  ९ हुनदाज्यं–स.  १० परो°–मु. पु.  ११ सर्वत्राज्याहुतीर्नृप–मु. पु.  १२ °स्ततो–ने; स; मु. पु.  १३ सति for गां च–मु. पु.

कलशाष्टसहस्रेण कलशाष्टशतेन च ॥
एकविंशतिना वापि स्नपनं कारयेद्बुधः ॥
शङ्खदुन्दुभिनि[1]र्घोषैर्गीतवादित्रमङ्गलैः ॥
यवव्रीहि[2]भृतैः पात्रैरुध्दृतैरुत्थिताङ्कुरैः ॥
दीपयष्टिपताकाभि[3]श्छात्रचामरतोरणैः ॥
स्नपनं कारयित्वा तु यथा विभवविस्तरम् ॥
तत्रापि दद्याद्विप्रेभ्यो यथा शक्त्या तु दक्षिणाम् ॥
एवं यः कुरुते राजन् प्रतिष्ठां देव चक्रिणः ॥
सर्वपापविनिर्मुक्तः सर्वभूषणभूषितः ॥
विमानेन विचित्रेण त्रिसप्तकुलजैर्युतः ॥
पूजां संप्राप्य महतीमिन्द्रलोकादिषु क्रमात् ॥
बान्धवांस्तेषु संस्थाप्य विष्णुलोके महीयते ॥
तत्रैव ज्ञानमासाद्य वैष्णवं पदमाप्नुयात् ॥
प्रतिष्ठाविधिरयं विष्णोर्मयैवं ते प्रकीर्तितः ॥
पठतां शृण्वतां चैव सर्वपापप्रणाशनः ॥

---

१ °घोषैस्तु वेदघोषैश्च मङ्गलैः—क. २ °युतैः—मु. पु. ३ °श्चित्रचामर—ने; स.

# [1]अथ विष्णुरेव प्रतिमाभेदेन प्रतिष्ठा ॥

[ तत्र ] [2]वाराहपुराणे--

[3]शृणु भूमि महाभागे मम कर्म व्यवस्थिते[4] ॥
कथयिष्यामि ते [5]हीनं कर्म संस्थापनं विभो ॥
मुक्त्वा सर्वाणि काष्ठानि यानि कानि च सुन्दरि ॥
तिष्ठामि मधुकाष्ठेषु गुह्यमेतत्परं मम ॥
तस्य कर्म प्रवक्ष्यामि एकाग्रा शृणु सुन्दरि ॥
मधुलाजांस्ततो दद्यात्तथा दध्यक्षतानि च ॥
दद्याच्छ्वेतानि माल्यानि गन्धानि च तथैव च ॥
श्वेतां[6]श्च पायसं दद्यादर्चनं तु समाचरेत् ॥
एवं तत्र विधिं कृत्वा मम कर्म[7]व्यवस्थितः ॥
'नमो नारायणे'त्युक्त्वा इमं मन्त्रमुदीरयेत् ॥

मन्त्रः[8] ॥ ॐ योऽसौ भवान् सर्वजनार्तिनाशनो नारायणः सर्वजगत्प्रधानः ॥
एतेन मन्त्रेण प्रविश्यमेतत् मधूकवृक्षेषु च लोकनाथ ॥
एतेन मन्त्रेण [9]भव त्वं सन्निहितः ॥ मधूककाष्ठेन विधिं करोमि ॥
[10]विद्यासुस्थितो नमो वासुदेव शान्तिर्भवतु नमो नारायणाय ॥ इति च स्वाहा ॥

---

१ अथ विष्णोरेव प्रतिष्ठा–क. २ वराहपुराणे वराह उवाच–क; वराह°–ने. ३ शृणु भूमीत्यारभ्य, एवं वस्त्रं ततो दद्यात् विधिदृष्टेन कर्मणा, इति पर्यन्तं पठितानि वचनानि, तदनुकारिवचनानि वा, मुद्रित वराहपुराणे अस्मिन् प्रकरणे नोपलभ्यन्ते। ४ °तिं–ने. ५ हीदं कर्म–स. ६ °तं च पायसं–क; °तां च पायसं–स.
७ °व्यवस्थितः। इर्जनं कुर्यात्कषायैर्गन्धसंयुतैः ॥
-क्षं वारं चार्जुनं च लौध्रम् वल्कलमेव च ॥
पालाणेन तु सम्मिश्रं कारयेत्तु विचक्षणः ॥
ततौ गन्धानि सर्वाणि सर्वबीजानि माधवि
पूर्वोक्तेन विधानेन वारिणा सह योजयेत् ।
वस्त्रे चैव ततो दद्यात् यथा सगुरु... ॥
नमो नारायणाये°–ने.
८ °न्त्रः–क; स. ९ भगवत्त्वासहितः–क. १० विद्यासदृश सुस्थित नमो वासुदेव भूषो भवाव्यज्ञो भव शान्तिर्भवतु। आरोग्यं भवतु नमो नारायण नारायणाय स्वाहा–क.

[1]अनेन मन्त्रेणानीय, विधाय, काष्ठप्रतिमानां, संस्कारो विधीयते ॥
एवं विधिः कृत्वा सन्निहितो [2]नमामि ॥

एवं[3]च्छित्वा ततो काष्ठं विधिदृष्टेन कर्मणा ॥
पूजये[4]दुपचारैश्च यथा तुष्यति येन वा ॥
एवमर्चां ततः कृत्वा सुरूपां [5]सुव्रतां शुभाम् ॥
ततः कर्माणि कुर्वीत येन तिष्ठामि शाश्वत[6]म् ॥
शुक्लपक्षे तु द्वादश्यां नक्षत्रे रेवतौ तथा ॥
तत्र मे स्थापनं कुर्याद्भूमि[7] सिद्धार्थसाधनम् ॥
यस्तु भागवतः शुद्धो मम कर्मण्यवस्थितः ॥
स तु कुर्वीत कर्माणि भूमि यश्च मम प्रियः ॥
यावकेन दिनं चैकमेकं [8]चक्रेण तिष्ठति ॥
एकं दिनं वायुभक्षश्चतुर्थे स्थापनं कुरु ॥
अन्यं च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ॥
अधिवासविधिं चैव कर्मणा येन तत्क्रिया ॥
घृतेन प्रथमं म्रक्षेद् [9]दध्ना तु तदनन्तरम् ॥
कलशान् गृह्य चतुरो वारिपूर्णा[10]नथावनि ॥
[11]ततः पूर्वाभिमुखो भूत्वा शुक्लवस्त्रेण भूषि[12]तः ॥
'नमो नारायणे'त्युक्त्वा [13]इमं मन्त्रमुदीरयेत् ॥

**मन्त्रः** ॥ ॐ योऽसौ भगवान् सर्वजगत्प्रदीपो यस्य[14] रश्मिः विशन्ति लोकाः ॥
[15]अनेन मन्त्रेण भवस्व वीर संस्थापिता तिष्ठ[16]स्व पद्मनाभ ॥
अथ तत्र चतुर्थेह्नि कल्यमुत्थाय माधवि ॥
कुर्यादभ्यञ्जनं चैव तिलतैलेन सर्पिषा ॥

---

१ एतेन मन्त्रेण विद्यया–क. २ भवामि–क. ३ स्थित्वा–क. ४ °दुपहारं च यथा–क. ५ निर्व्रणां शुभाम्–स. ६ °तः–क. ७ °मिस्सर्वासु साधनम्–क. ८ तक्रेण–स. ९ तत उद्वर्तनं परम्–क. १० °न्यथाविधि–क. ११ ततः पूर्वामूखो°–स १२ °तां–क. १३ ध्यानं मन्त्रमुदाहरेत्–क; इमं मन्त्रमुदाहरेत्–स. १४ यो यस्य...वशे–स. १५ एतेन–क. १६ °सु पद्मनाभः–क; संस्थापित तिष्ठस्व पद्मनाभ–स.

ततश्चोद्वर्त्तनं कुर्यात्स्व[1]कायैर्गन्धसंयुतैः ॥

प्लाक्षं वाटं चार्जुनं च लौध्रं वल्कलमेव च ॥

पालाशेन तु संमिश्रं कारयेत्तु विचक्षणः ॥

ततो गन्धानि सर्वाणि सर्वबीजानि माधवि ॥

पूर्वोक्तेन विधानेन वारिणा सह योजयेत् ॥

वस्त्रे चैव ततो दद्याद्यथा [2]स गुरुस्तुष्यति ॥

ततः पूर्वामुखो भूत्वा सर्वं कर्म[3]पथास्थितः ॥

मम संस्थापनार्थाय इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः** ॥ ॐ [4]योऽसौ भूमिपरो महान् मङ्गलेन पुमान् परतः सर्वरत्नपूर्णः ।
अनेन मन्त्रेण भवस्व वीर संस्थापितस्तिष्ठस्व वासुदेव ॥

ततो वादित्रशब्देन [5]सूतभिर्मागधैस्तथा ॥

नर्तकैर्गीतकैश्चैव भूमिवेश्म प्रवेशयेत् ॥

संस्थाप्य द्वारमूले [6]शुभकर्मसुनिष्ठितः ॥

पठन्ति सामानि सूक्तान्यनुवाकाँश्च ब्राह्म[7]णा मम पाठकाः ॥

तेषां शान्त्युदकं दद्युर्ब्राह्मणाः सामपाठकाः ॥

तच्च शान्त्युदकं गृह्य [8]सरत्नकनकोज्वलम् ॥

स्नापयेद्द्वारमूले च इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः** ॥

" [9]योऽसौ भवा.... भूतपूर्वाभिमुखस्तिष्ठति विश्वरूप " ॥

एतेन मन्त्रेण प्रविश्य वेश्म संस्थापितस्तिष्ठस्व लोक[10]नाथ ॥

---

१ °त्कषायैर्ग°–क; स. २ स गुरु तुष्यति–स. ३ °पथे स्थितः–क; समकर्मपथे स्थितः–स. ४ यो सौ परो भूमिमहान् मङ्गल्येन पुमान् पुरतः–क. ५ सूतभिर्मगधैस्तथा–स. ६ सुमकर्मसुनिर्मितः–क; द्वारमूले तु मम कर्मसु निष्ठितः–स. ७ °णाः तेषां–क. ८ सरत्नं कन°–स. ९ योसौ भगवानिनास्मि भूतं–क; यौऽसौ भावा...स. १० °नाथ । आधरभूतस्तव सुस्थाने–क.

एतेन भूमिवेश्मप्रवेशो स्थापयित्वा वेश्ममध्ये इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

ॐ भगवते तस्मै जगत्प्रतिष्ठा प्रविश्य काष्टेपि लोकनाथ ॥
आधारभूत सुभवस्व स्थाने संपूजित[1]स्तिष्ठस्व वासुदेव ॥
ततस्तु स्थापनं कृत्वा [2]स्नानं तत्र च कारयेत् ॥
विविधैर्गन्धललाजैश्च सर्वबीजसमन्वितैः ॥
तत्र संस्थापनं कृत्वा मम कर्मपरायणः ॥
वस्त्रं दद्यात्ततो भूमिपीतकानि न संशयः ॥
यज्ञोपवीतकं चास्य जानुभ्यां भूमिसंस्थितः ॥
'नमो नारायणे'त्युक्त्वा इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

ॐ [3]नारायणं चादिमनन्तरूपं संस्थापितोऽसौ सर्वतो [4]भूमिमन्त्रः ॥
इत्यनेन मन्त्रेण इमं वस्त्रं गृह्णीष्व लोकनाथ ॥
एवं वस्त्रं ततो दद्याद्विधिदृष्टेन कर्मणा ॥
[5]ततो दद्याच्च तान् गन्धान् ये मया समुदाहृताः ॥
कर्पूरं कुङ्कुमं चैव त्वचं चागुरुमेव च ॥
रसं च चन्दनं चैव सिल्हकोशीरकं तथा ॥
एतैर्विलेपनं [6]दद्यात्सुरभिस्तु विचक्षणः ॥
स्वस्तिकं वर्द्धमानं च नन्द्यावर्त्तानि माधवि ॥
एवं सर्वं ततो [7]दद्याद्यन्मया परिकीर्तितम् ॥

---

१ °ते तिष्ठसि–क. २ सुपनं तत्र कारये°–क. ३ ओं नमो नारायणं चादिमनंतरूपिणं–क. ४ भूतमन्त्रः–क. ५ वराहपुराण, ed. Bibliotheca Indica, १८१, ११–मुद्रितवराहपुराणवचनानाम् अत्र दृश्यमानवचनानां च पाठभेदनिर्देशः, मुद्रितवचनानां पुनर्मुद्रणे पुनरुक्तिर्भवेदिति मन्यमानैरस्माभिः विरमितम् । ६ दद्यादर्चितस्तु विचक्षणः–मु. व. पु. १८१, १४ ७ दद्यान्मया च परिकीर्तितम्–क.

कर्मणा विधिदृष्टेन शुद्धो भागवतः शुचिः ॥
प्राणायामं ततः कृत्वा इमं मन्त्रमुदाहरेत् ॥

[1]मन्त्रः ॥

ॐ योऽसौ भवां[2]स्तिष्ठते सर्वजगत्प्रधानः ॥
सर्वाणि लोकानि च यस्य....देहे ॥
स देव देवो भुवनस्य गोप्ता काष्ठे तु सांनिध्यं सदा करोतु ॥
एवं संस्थापनं कृत्वा काष्ठस्य प्रतिमां[3] तथा ॥
पुनः प्रदक्षिणं कृत्वा शुद्धैर्भागवतैः सह ॥
प्रज्वाल्य दीपका[4]न्यष्टौ कृत्वा चार्घान्सुसंस्थितान् ॥
[5]ततस्तैः कर्मभिः सर्वं दम्भपैशुन्यवर्जितः ॥
नमो नारायणेत्युक्त्वा इमं मन्त्र[6]मुदाहरेत् ॥

मन्त्रः ॥

योऽसौ भगवान् सर्वजगत्प्रभुस्त्वं
[7]वसन्ति लोकास्तव देव देहे ॥
अनेन मन्त्रेण च लोकनाथ
संस्थापितस्तिष्ठतु[8] वासुदेव ॥
[9]सर्वमेवं ततः कृत्वा मम संस्थापनक्रियाम् ॥
पूज्या भागवताः सर्वे ये तत्र समुपागताः ॥
गन्धमाल्यैश्च धूपैश्च [10]अर्चयित्वा च भोजनैः ॥
कुर्यात्सत्करणं तेषां विधिदृष्टेन कर्मणा ॥
एतत्कर्मविधानं च मधुकाष्ठस्य सुन्दरि ॥
धर्मसंस्थापनार्थाय एतत्ते कथितं मया ॥

---

१ ओं मन्त्रः—ओं यस्तिष्ठते सर्वजगत्प्रधानं—क. २ °तिष्ठते सर्वयोगप्रधानतः—मु. व. पु., १८१, १५—The rest is entirely different. ३ °मासु च—क; मु. व. पु , १८१, १५ ४ °कानष्टौ कृत्वा कुर्यात्सुसौस्थितान्—क; °कानष्टौ कृत्वा—स; प्रज्वाल्य दीपं तत्रैव अर्चायाः सन्मुखं स्थितः—मु. व. पु. १८१, १७ ५ तत्राद्यैः कर्मभिस्सर्वं शुभं पैशुन्यवर्जितं—क. ६ °मुदीरयेत्—मु. व. पु. १८१, १७ ७ गतिः प्रभुस्त्वं वससि ह्यमोघ—मु. व. पु., १८१, १९ ८ °तिष्ठसु वासुदेव—मु. व. पु १८१, १९ ९ सर्वमिवं—स. १० उपलेपैश्च भोजनैः—मु. व. पु., १८१, २१

य एतेन विधानेन अर्चां काष्ठेषु स्थापयेत् ॥

[१]न च गच्छति संसारं मम लोकं [२]स गच्छति ॥

**इति काष्ठार्चा[३]स्थापनम् ॥**

---

**वराहपुराणे**— [ १८२, १ ]

**वराह उवाच ॥**

[४]पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ॥

यथा तिष्ठामि शैलेषु [५]प्रतिमायामितस्ततः ॥

सुरूपां च शिलां दृष्ट्वा निःशल्यां सुपरीक्षिताम् ॥

[६]तत्र दक्षं रूपकारं शीघ्रमेव नियोजयेत् ॥

[७]पुष्ये चैत्र च नक्षत्रे पूर्वाह्णे च दिवाकरे ॥

[८]शिलामालिख्य वर्णेन श्वेतवर्णिकया [९]तथा ॥

आलेख्यं लेखयित्वा तु मम कर्मपरायणः ॥

अर्घं सदक्षिणं कृत्वा मधुला[१०]जा समन्वितम् ॥

दीपकं च बलिं दत्त्वा दध्ना चैवोदकेन च ॥

नमो नारायणेत्युक्त्वा इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

ॐ योऽसौ [११]भगवान् सर्वजगत्प्रवीरः ॥

[१२]सदृशमग्निर्दहनः प्रधानम् ॥

एतेन मन्त्रेण तु वासुदेव सुरारिविध्वंसक वासुदेव ॥

वराह [१३]जय जयस्व सुप्रतिष्ठा सुप्रतिष्ठितकीर्तिः प्रवर्द्धतां च ॥

एतेन मन्त्रेण रूपं कर्तव्यं [१४]यस्य यादृशं रोचते ॥

---

१ १८१ अध्यायस्समाप्तः २ च—क. ३ °स्थानं—क. ४ १८२ अध्यायारम्भः ५ पूज्यमान इतस्ततः—क. ६ सुदद्यनुपहारं तु शीघ्रमेव—क. ७ पुण्ये—क; स. ८ शीघ्रमानीय्यवर्णेन—क. ९ °पि वा—क ; °वर्तिकया—ने; स. १० °जसमन्वितः—क. ११ भवान् सर्वे°—स. १२ सदृशमनुं जगतः प्रधानम्—क १३ जय प्रतिष्ठ सुप्रतिष्ठस्य प्रतिष्ठैव कीर्तिः सावक्षतां च—क. १४ यस्य सदृशश्चोच्यते—क.

एवं रूपं ततः कृत्वा रम्यं रम्यशिलोच्चये [ च ] ।
ततो वै [1]स्नपनं कुर्यात्सर्वगन्धसुगन्धिभिः ॥
[2]संस्थापयेत्तत्र भूमेः पूर्वाभिमुखमेव हि ॥
अहोरात्रोषितश्चैव शुक्लवस्त्रेण [3]वेष्टितः ॥
शुक्लयज्ञोपवीती च कृत्वा वै दन्तधावनम् ॥
सर्वगन्धोदकं गृह्य इमं मन्त्रमुदाहरेत् ॥
ॐ योऽसौ भवांस्तिष्ठति सर्वरूप
[4]मायामयं सर्वजगत्स्वरूपम् ॥
एतेन मन्त्रेण [5]सर्वस्वरूपे
सम्पूजितस्तिष्ठस्व लोकनाथ ॥

करणकारण [6]सन्तरण अनघ अनादे । अजरामर सम्पूज्य स्वागतमात्मानम् । अनेन मन्त्रेण ॐ नमो वासुदेवाय ॥

एवं तु स्नपनं कृत्वा शैलार्चा मम सुन्दरि ॥
ततोऽधिवासः कर्तव्यः पूर्वप्रोष्ठपदासु च ॥
यो मे संस्थापये[7]द्भूमे मम कर्मपरायणः ॥
[8][ स याति वैष्णवं लोकं नात्र कार्या विचारणा ॥ ]
यावकं पायसं भुक्त्वा [9]अहोरात्राणि कारयेत् ॥
ततः पश्चिमसन्ध्यायां दत्त्वा [10]वा स्थानदीपकान् ॥
पञ्चगव्यं च गन्धांश्च वारिणा सह मिश्रयेत् ॥

---

१ स्नापनं—स. २ ततः संस्थापयेत्तत्र भूमिसर्वसुखावहं—क; ततस्सं°—ने; स. ३ संयुतः—क; भूषितः—मु. व. पु., १८२, ७ ४ मायाबलं—मु. व. पु. १८२, ८ ५ °भवः सुरूप संपूजित एहि च लोकनाथ—क; °भव स्वरूप—स; °जगत्स्वरूप—मु. व. पु.१८२, ८ ६ संभरणमध्यजना अजरामरसंपूज्य आगतमामेति मन्त्रेणे ओं नमो वासुदेवाय—क; करणधारणप्रवध्यमुदाहरणमपराजितमजरामर संपूज्य स्नापयात्मानमनेन मन्त्रेण ओं नमो वासुदेवाय ॥ ( मुद्रित व. पु.; पृ. १०२१ ) ७ °भुवि—क. ८ [ ] मु. व पु., १८२. १० ९ अहोरात्रं समापयेत्—मु. व. पु. १८२, ११ १० चत्वारि दीपकान्—मु. व. पु., १८२, ११

चतुरः कलशांश्चैव पादमूलेषु स्थापयेत् ॥
गीतवादित्रघोषेण [1]नाद्यं तु सह कारयेत् ॥
[2][ ब्राह्मणैः सामगैस्तत्र वेदघोषन्तु कारयेत् ॥ ]
पठन्ति ब्राह्मणा [3]मद्यं सामवेदं गुणान्विताः ॥
ब्रह्माक्षरसहस्राणि सन्धाय तत्र वाचयेत् ॥
येषां पठितशब्देन सर्वगीतस्वनेन च ॥
आगमिष्यामि कल्याणि आत्ममन्त्रं[4] पठेत् स्थितः ॥
एवं तु पठतां तेषां ब्राह्मणा सामगायकाः ॥
समसंस्थापनार्थाय पठन्ति मम कर्म[5]काम् ॥
तेन वादित्रघोषेण सामगा वाजसनेयकाः ॥
तान्येव मधुपर्केण [6]गीतेनान्यो मनो........॥
निःशब्दं तु ततः कृत्वा स्थाप्यो भागवतैः सह[7] ॥
पुनः संस्थापनं कृत्वा इमं मन्त्रमुदाहरेत्[8] ॥
[9]आगच्छ देवात्र स्वमन्त्रयुक्त पञ्चेन्द्रियः षष्टमनः स्वरूप ॥
पञ्चेषु भूतेषु परावरज्ञ आवासितस्तिष्ठसि लोकनाथ ॥
[10]जनधारणकारण अनादिमध्य अनन्तरूप सम्पूज्यसे देववरप्रिय ॥
भक्त्या मया भावित भक्ति[11]भाव एतेन मन्त्रेण विधिपूर्वकम् ॥
सर्वगन्धैश्च लाजैश्च पञ्चगव्यैः पुनस्तथा ॥

---

१ नाद्या च सह–क; उत्सवं तत्र कारयेत्–मु. व. पु., १८२, १३ २ [ ]–मु. व. पु., १८२ १४ ३ यक्ष -क. ४ °मन्त्रपथे स्थितः-क; मन्त्रपाठो मम प्रियः–मु. व. पु., १८२, १४ ५ °कान्–क; स. ६ गीतेनास्य मनोभव–क; गीतेनान्ये मनो°–स. ७ मु. व. पु., ( १८२, १५ ) पाठः ८ पुनरावाहनं कुर्यान्मन्त्रेणानेन सुव्रतः-मु. व. पु., १८२, १५ ९ आगच्छाह मन्त्रमन्त्रयुक्तं पञ्चेन्द्रियषष्ठनमस्तरुप । क; पञ्चसु भूनेषु परापरज्ञ–क; पञ्चेन्द्रियैः षट्सु तया प्रधानः एतेषु भूतेषु च संविधाता–मु. व. पु., १८२, १६ १० एवं जनधारण करणकारणमजादिमध्यमनंतरूप–क; मु. व. पु., न दृष्टः ११ °भाव एतेन मन्त्रेण समिधाष्टशतं सतिलघृतमधु होतव्यं, एवं सन्निहितो भवामीति,

ततः संस्थापयेद्देवं प्रसन्नश्चोत्तरामुखम् ।
स्थाप्यैवं देवदेवेशं मन्त्रेण विधिपूर्वकं ॥
सर्वगन्धैश्च लाजैश्च पञ्चगव्यैः पुनस्तथा । क; ने.

ततो मे स्थापने [1]कुर्याद्द्वारि संतिष्ठते मम ॥
वादित्रस्य च शब्देन ब्राह्मणानां स्वनेन च ॥
सर्वगन्धं ततो गृह्य इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

ॐ योऽसौ [2]भवान् लक्षणलक्षितश्च
लक्ष्म्या च युक्तः सततं पुराणः ॥
[3]एतेन मन्त्रेण प्रविश्य वेश्म
संतिष्ठसे शाश्वत लोकनाथ ॥
[4]तत एतेन मन्त्रेण प्रासादं च प्रवेशयेत् ॥
संस्थापितस्य मे धात्रि [5]ततः स्थानमुपाश्रितः ॥
एवं संस्थापनं कृत्वा कुर्यादुद्वर्त्तनं विभो ॥
चन्दनं कुङ्कुमं चैव मिश्रकालागुरुं तथा ॥
इमं चोद्वर्तनं कृत्वा इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

[6]ॐ योऽसौ भगवान् सर्वजगत्प्रधानः ॥
सम्पूजितो ब्रह्मबृहस्पतिभ्याम् ॥
प्रवन्दिनः कारणमन्त्रयुक्ताः
सुस्वागतं तिष्ठ सुलोकनाथ ॥
एवं संस्थापनं कृत्वा गन्धमाल्यैश्च पूजयेत् ॥
शुक्लवस्त्राणि मे दद्यादिमं मन्त्रमुदा[7]हरेत् ॥

---

१ °नं कुर्यात् वरं स्थापनं मम–क; °नं कुर्याद्वारि–स. २ भगवान् लक्षण सूततेजाः क्षतिलक्षणाच सदाति पूर्णः एतेन–क. ३ अत्र प्रसादे–स, सयुद्धतेजाः प्रवेशमायाहि नमो नमस्ते ॥ मु. व. पु., १८२, २० ४ ततोप्येतेन मन्त्रेण प्रासादे च प्रवेशयेत्–क. ५ ओं देवदेवस्वरूप–क; ओं योऽसौ भवान्–स. ६ तत् स्थान°–स. ७ रेत । मन्त्रः । ओं–ने.

ॐ देवदेवस्वरूप रम्येषु वस्त्रेष्वपि यस्य चित्तम्[1] ॥
एतेन [2]मन्त्रेण ग्रहाणवस्त्रं चरस्व मन्त्रेण पुरा कृतेन ॥
एवं वस्त्रं तु मे दद्याद्विधिदृष्टेन कर्मणा ॥
धूपं च मे ततो दद्यात्कुङ्कुमागुरुमिश्रितम् ॥
एवं धूपवरं दत्त्वा इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

ॐ वनस्पतिरसो दिव्यो गन्धाढ्यो [3]वरण उत्तमः ॥
बहु[4]द्रव्यसमायुक्तो धूपोऽयं प्रतिगृह्यताम् ॥ स्वाहा ॥[5]
ॐ [6]असावनादिः पुरुषः पुराणो
नारायणः सर्वजगत्प्रधानः ॥
[7]मनः प्रसादं सुमन....प्रतिगृह्य धूपम् ॥
एवं पूजां ततः कृत्वा[8] कुर्यान्मे प्राण....
पूर्वोक्तेन विधानेन [9]यन्मया भाषितं पुरा ॥
[10]एवं मे प्रापणं कृत्वा जलेनाचमनं कुरु ॥
'प्रापणं' नैवेद्यम् ।
शान्तिर्भवतु भद्रं ते सर्वसिद्धार्थे[11] साधकम् ॥

**मन्त्रः ।**

ॐ शान्तिर्भवान् कुर्वतु लोकनाथ ॥

---

१ वस्त्राणि देवेश गृहाण तानि, मया सुभक्त्या रचितानि यानि ।
इमानि सन्धारय विश्वमूर्ते, प्रसीद मह्यत्र नमो नमस्ते ॥ इति मु. व. पु., १८२, २१
२ मन्त्रेण पुरा कृतानि । एवं वस्त्राणि–क. ३ °वर्ण उत्तमः–क; ने; स. ४ °हव्य–ने.
५ missing in मु. व. पु. (पृ. १०२३) ६ अनामध्यपरः नमः प्रवादः । सुमनाः प्रतिगृह्य धूपमिति–क. ७ वृत्तेनैवोपवासेन कुर्याद्वै मम श्रापनं–क; गन्धश्च माल्यानि च धूपदीपौ गृहाण देवेश नमो नमस्ते–मु. व. पु., १८२, २७ ८ °न्मे प्रापणं कृत्वा जलेनाचमनं कुरु–ने; स. ९ प्रापणञ्चोपकल्प्य च–मु. व. पु., १८२, २८ १० प्रापणान्ते चाचमनं दद्याद्देहविशुद्धये–मु. व. पु., १८२, २९
११ साधकाः–क; शान्तिजाप्यं ततः कार्यं सर्वकार्यार्थसिद्धये–मु. व. पु., १८२, २९

राज्ञः सराष्ट्रस्य च ब्राह्मणानाम् ॥
सबालवृद्धेषु गवां गणेषु
शान्तिं च कन्यासु पतिव्रतासु ॥
[1]नश्यन्तु रोगास्त्वथ ईतयश्च
भवन्तु सर्वे मुदिताश्च भूताः ।
शाकेषु व्रीहिष्वथ कर्षकाणां ।
सुभिक्षकालः..........नाथ ॥
[2]एवं तु सततं कृत्वा विधिदृष्टेन कर्मणा ॥
पूज्यभागवतान् भूमिं यथान्यायेन कर्मणा ॥
भोजयेद्ब्राह्मणांस्तत्र यथोत्पन्नैश्च भोजनैः ॥
य एतेन विधानेन कुर्यान्मे स्थापनं शुभम् ॥
तत्राहं भूमि तिष्ठामि एतत्ते कारणं मम ॥
यावन्तो मम गात्रेषु जलबिन्दून्नियोजयेत् ॥
तावद्वर्षसहस्राणि मम लोके स तिष्ठति ॥
यो मां तु स्थापयेद्भूमि सर्वाहङ्कारवर्जितः ॥
[3]सन्तारितानि कुलानि तेन सप्त च सप्ततिः ॥
एतत्ते कथितं भद्रे [4]शैलार्चास्थापनं मम ॥
धर्मसन्धारणार्थाय मम भक्तसुखावहम्[5] ॥

**इति शैलार्चास्थापनम्[6] ॥**

---

१ रोगा विनश्यन्तु च सर्वतश्च
कृषीवलानां च कृषिः सदा स्यात् ।
सुभिक्षयुक्ताश्च सदा हि लोकाः
काले सुवृष्टिर्भविता च शान्तिः ॥ मु. व. पु., १८२, ३१

२ एवं विधिं ततः कृत्वा विधिदृष्टेन कर्मणा ।
संपूज्य तत्र देवेशं ब्राह्मणान् भोजयेद्व्रती ॥ मु. व. पु., १८२, ३२

३ तारितानि कुलानि तेन—क. ४ शैलकार्चासु स्थापनं मम भक्तसुखावहम्—क. ५ मम भक्तसुखाय च—मु. व. पु., १८२, ३५ ६ १८२, अध्यायस्समाप्तः—

## अथ मृण्मयार्चास्थापनम् ॥[1]

पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ॥
[2]प्रतिष्ठां मृन्मयार्चासु यथावच्च ब्रवीम्यहम् ॥
कृत्वा तु मृन्मयं रूपम[3]स्फुटं चाप्यखण्डितम् ॥
[4]न चैव वामनं कुर्यान्न वक्रं नाधिकं तथा ॥
ईदृशीं प्रतिमां कृत्वा मम कर्मपरायणः ॥
सर्वमूर्तिषु चैवात्र यथा वै रोचते तथा ॥
भूमि [5]काष्ठस्याभावेन मृन्मयीं तत्र कारयेत् ॥
शैलजां वा ततो भूमिं मम कर्मपरायणः ॥
ताम्रकांस्येन रौप्येण सौवर्णत्रपुरीतिकाः ॥
कुर्वन्ति शुभ[6]कर्माणः केचि[7]द्दर्भेण वा पुनः ॥
अर्चनं चापरे वेद्यां [8]मम कर्मपरिग्रहात् ॥
केचिल्लोकापवादेन [9]ख्यात्यै कुर्वन्ति केचन ॥
कुड्ये लेख्ये च मे कश्चित्पटे कश्चिच्च मानवः ॥
पूजयेद्यदि वा चक्रे मम तेजोंऽशसम्भवम् ॥
पद्मे मे पूजनं शस्तं शस्तं चैवाथ स्थण्डिले ॥
भूमि तत्र हि जानीहि स्थापितोऽहं न संशयः ॥
[10]सर्वत्र संप्रतिष्ठामि पूज्यमानस्त्वहं त्वतः ॥
मन्त्रवद्विधिपूर्वाणि यो मे कर्माणि कारयेत् ॥

---

१ मु. व. पु., १८३ अध्यायारम्भः २ तिष्ठामि मृन्मयार्चासु यथ तच्च ब्रवीम्यहम्—क. ३ स्फुटं चाप्यथ मुण्डितम्—क. ४ तेनैव त्वामलंकुर्यात् नवक्रं—क. ५ °स्यलोमे°—क; °काष्ठानामप्यलाभे तु मृण्मयं तत्र कारयेत्—मु. व. पु., १८३, ४ ६ °कर्माणि—क. ७ °दर्पेण वा—क; कोविदोऽहंमहं भवम्—मु. व. पु., ५ ८ मम नाम परिग्रहाः—क. ९ शान्तिं कृत्वा तु नित्यशः—क. १० सर्वत्र संतिष्ठामि पूज्यमानस्त्वहं त्वतः—स.

एवमेतन्महाभागे मया सम्परिकीर्तितम् ॥

मन्त्रेण विधिपूर्वेण योऽर्चयेन्मम सुन्दरि ॥

यश्च [1]भक्तिप्रयत्नेन [2]कर्मणः परिकीर्तितम् ॥

[3]मम चैव प्रसादेन स सर्वगत एव च ॥

सत्याकाशेऽपि तिष्ठेत्तु कृत्वा भक्तिं ममान्तिके ॥

[4]दद्याज्जलाञ्जलिं मह्यं यदीच्छेदात्मनः क्रियाम् ॥

किं ते पुष्पेण जप्येन सहस्रे[5]णायुतेन च ॥

यस्य [6]प्रशस्तं चित्तं च मानसं न च लालसम् ॥

एवमेतन्महाभागे महागुह्यं प्रकीर्तितम् ॥

अर्चां तु मृन्मयीं कृत्वा सिद्धां सुपरिनिष्ठिताम् ॥

श्रवणे चैव नक्षत्रे कुर्यात्तस्याधिवासनम् ॥

अप्रमत्तैर्गृहीतव्या यथा भूमिं न गच्छति ॥

स्नापयेत्तु[7] यथान्यायं सम्पूज्य विधिपूर्वकम् ॥

पञ्चगव्यं च गन्धांश्च वारिणा सह मिश्रयेत् ॥

ततो मे [8]स्नपनं कृत्वा इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

योऽसौ भगवान् सर्वजगत्प्रधानो

यस्य प्रसादेन [9]धवन्ति लोकाः ॥

[10]आयातु मे शीघ्रं कुरु प्रसादं

---

१ भाक्ति प्र°–क. २ सुकर्म परिनिश्चितः–क. ३ मम चैव प्रसादेन प्राप्नोति गतिमुत्तमाम्–मु. व. पु., १८३, ८ ४ क्षिपेज्जलां°–क. ५ °ण गतेन वा–क. ६ प्रपन्नं वित्तं च–क. ७ ह–क. ८ स्थापनं कृत्वा–क. ९ भवन्ति लोकनाथाः–क; भवन्ति–ने; त्ववन्ति–स. १० स त्वं कुरुष्वाच्युत मत्प्रसादं–मु. व. पु., १८३, १५

तिष्ठस्व अर्चासु च मृन्मयीषु ॥
कारणकारण[1]गुह्यमूर्त्ते भजस्वेमां प्रतिमां [2]ममेज्यां ।
नमो[3] नमस्ते सहस्रमूर्त्ते तेजस्विन्निमां प्रतिमां महापुरुषाय नमो नमः ॥
ततोऽप्येतेन मन्त्रेण वेश्म प्रवेश्म[4] संस्थापयित्वा ॥
एवं प्रवेशनं कृत्वा विधिदृष्टेन कर्मणा ॥
[5]एवं संस्थापयेत्तत्र दद्या[6]दुपरि निर्मितम् ॥
एवं संस्थाप[7]यित्वा च पूर्वभागेन निश्चलः ॥
चतुरः कलशान् गृह्य इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

[8] ॐ वरुण सुमुद्र[9]लोकसम्पूजितो ह्यात्मगतिप्रसन्नः ॥
एतेन मन्त्रेण ममाभिषेकं प्राप्नुहि वरिष्ठ वासुदेव ॥
ऊर्ध्ववाहु[10]रग्निरग्निर्भूमिरापो भवन्ति यस्मात्तस्मै नमो नमः ॥
पुरुषोत्तमायेति ॥ एतेनाभिषेचनं कृत्वा मम कर्मपरायणः ॥
पूर्वन्यायेन हे भूमि गन्धमाल्यैः समर्चयेत् ॥
अगुरुं कुङ्कुमं चैव चन्दनं [11]सुरसं तथा ॥
नमो नारायणायेति धूपं तत्र प्रदापयेत् ॥
धूपं दत्त्वा यथान्यायं [12]पीतं वस्त्रं प्रदापयेत् ॥

**मन्त्रः ॥**

ॐ [13]धूपेषु दीपेषु सदा प्रसन्नो येन प्रसन्नेन जगत्प्रसन्नम् ॥
गृह्णीष्व वस्त्रं सुखसुप्रसन्नमिदं च तिष्ठति सदा प्रयत्नः ॥

---

१ ह्युग्रतेजसं द्युतिमन्तं महापुरुषं नमो नमः । अनेन मन्त्रेण वेश्मनि प्रविश्य स्थापनां कुर्यात् ॥ (मु. व. पु. १८३, १६) २ समग्रां–क. ३ नमश्चैव सहस्रमूर्तिन् भजस्वेमां महापुरुषाय नमो नमः–क. ४ °श संस्थापयितव्यः–क. ५ देवं–क. ६ °दपरिनिष्ठितम्–क. ७ °ये तत्र पूर्वन्याये निश्चितः–क.

८ ओं वरुण समुद्रो लब्ध्वा संपूजितो ह्यात्मप्रतिप्रसन्नः । (मु. व. पु., १८३, १७). ९ °लब्धसंयोजितो ह्यमेह्यभिप्रसन्नः–क. १० °बाहुरग्निर्भूमिरापो–स. ११ च रसं तथा । कर्पुरमिश्रं च तथा धूपे तत्र प्रदीयते–क. १२ दीप्तं वस्त्रं उदाहरेत् । नमो नारायणेत्युक्त्वा इमं मन्त्रं उदाहरेत् ।, क. १३ वस्त्रे प्रदीपेषु सदा प्रसन्नो जनप्रसन्नेन–क.

तत एतेन मन्त्रेण वस्त्रं दद्याद्यथाविधि ॥[1]
पूर्वन्यायेन मन्त्रेण इमानि कर्माणि कारयेत् ॥
कृत्वा तु विपुलं कर्म यन्मया परिकीर्तितम् ॥
ततो मे स्नपनं दद्यात्पूर्वन्यायेन संस्कृतम् ॥
एवं तत्र विधिं कृत्वा दापयेत्तत्र प्रापणम्[2] ॥
पश्चादाचमनं दद्यात्तत्र मन्त्रमुदाहरेत् ॥
ॐ शान्तिर्देवानां शान्तिर्ब्राह्मणानां
शान्तिरस्तु मे राष्ट्रकस्य ॥
मे शान्तिर्वर्धतां शान्तिर्गवां शान्तिश्च गर्भिणीनाम् ॥
शान्तिश्चतुष्पदे शान्तिर्धान्यराशे व्रीहौ शान्तिः ॥
ततोऽप्येतेन मन्त्रेण शान्तिं कृत्वा महौजसीम् ॥
पश्चाद्भागवतान् पूजयेद्यथान्यायं स्वशक्तितः ॥
एवं भागवतान् पूज्य ब्राह्मणांश्चाथ पूजयेत् ॥
ततोऽभिवादनं कुर्यादुपपन्नेन भोजनम् ॥
ब्राह्मणाँस्तु तथा पूज्य गृहे[3] शान्त्युदकं तथा ॥
दद्याच्छिरसि मे भूमि यदीच्छेत्सिद्धिमुत्तमाम् ॥
एवं विसर्जनं कृत्वा एतां भूमिमुपागताः ॥
पूजयेच्च गुरुं तत्र यदीच्छेत्कर्म शाश्वतम् ॥
यो गुरुं पूजयेद्भक्त्या विधिदृष्टेन कर्मणा ॥
तेनाहं पूजितो नित्यं भूमि सत्यं ब्रवीमि ते ॥
नेदं ममैव शास्त्रेषु यदिदं वचनं शुभे[4] ॥
सर्वशास्त्रेषु कल्याणि [5]गुरुः पूज्यो व्यवस्थितः ॥

---

१ तत एतेन वस्त्राणि दद्याद्यथोचितम्–क. २ प्रापणं–क. ३ °हशान्त्युदकस्तथा–क. ४ °चं–क. ५ गुरुपूजा–मु. व. पु; २८३, ३०

य एतेन विधानेन कुर्यात्संस्थापनं मम ॥
तारिताश्च कुलास्तेन त्रीणि त्रिंशच्च सप्ततिः ॥
[1]यावतो जलबिन्दूंश्च मम गात्रेषु योजयेत् ॥
तावद्वर्षसहस्राणि ममलोके स तिष्ठति ॥
य एतेन विधानेन कुर्याद्वै मृन्मयस्य च ॥
[2]कथयिष्यामि ते ह्यन्यत्सर्वं भगवतः प्रियम्[3] ॥

## इति मृन्मयार्चास्थापनम् ॥

## अथ ताम्रार्चास्थापनम् ॥[4]

ताम्रीं तु [5]प्रतिमां कृत्वा सुरूपां च सुभास्वराम् ॥
उचितेनोपचारेण ततो वेश्म उपानयेत् ॥
ततो वेश्मन्युपागम्य स्थापयित्वा उदङ्मुखम् ॥
ततश्चित्रा सुनक्षत्रे कुर्यात्तत्राधिवासनम् ॥
[6]लाजाभिः सर्वगन्धैश्च पञ्चगव्येन मिश्रितैः ॥
स्नापयेच्च ततो मां वै इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

ॐ योऽसौ भवांस्तिष्ठति साक्षिभूत[7]
[8]आगच्छमूर्तौ सहपंचभूतैः ॥
गुह्यप्रमाणं भगवान् पुरुषोत्तम शाश्वत ॥

---

१ पूजायां मम मार्गेषु पतन्ति जलबिन्दवः । तावद्वर्षसहस्राणि मम लोकेषु मोदते ॥ (मु. व. पु., १८३, ३२ २ कथयामि तदन्यंतु सर्वं भगवतः प्रियं–क. ३ मु. व. पु. १८३ अध्यायस्समाप्तः । ४ मु. व. पु., १८४ ५ ताम्रेण प्रतिमां–मु. व. पु., १८४. १ ६ लताभिस्स–ने. ७ सारभूतः । स ताम्रके तिष्टति नेत्रभूतः,
आगच्छ मूर्ती सह पञ्चभूतैः
मर्या च पात्रैः सह विश्वधाम–मु. व. पु. १८४, ४ ८ आगच्छ आगच्छ स्वयं च भूतममानुरूपं निगम्य संस्थितः । गुह्यप्र–क.

अनेनैव तु मन्त्रेण स्थापयित्वा यशस्विनि ॥
पूर्वन्यायेन मे तत्र भूमिकर्माणि कारयेत् ॥
व्यतीतायां तु शर्वर्यामुदिते तु दिवाकरे ॥
दिशासु च प्रसन्नासु स्नपनं तत्र कारयेत् ॥
ब्राह्मणैः पठ्यमानेषु गीतवादित्रनिःस्वनैः ॥
मङ्गल्यानि च वस्तूनि द्वारमूलेषु स्थापयेत् ॥
द्वारमूलमुपागम्य सर्वगन्धसुगन्धिभिः ॥
ततो मे स्नपनं कुर्यादिमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

ॐ योऽसौ भगवान् सर्वत्रः प्रभुश्च
मायाबलो योगबलप्रधानः ॥
आयाहि आयाहि इमां च मूर्तिं
सन्तिष्ठ ताम्रेष्वपि लोकनाथ[1] ॥

ज्वलन ज्वालन तपन तापन स्वयं तिष्ठ ॥ 'ॐ नमो भगवते पुरुषोत्तमाये'ति [2]सूक्तम् ॥ ततो द्वारमुपागम्य शीघ्रं वेश्म प्रवेशयेत् ॥

वेद्यां प्रवेशनं कृत्वा युक्त्या ध्यायेत संस्कृतम् ॥
स्नपनं च ततो दद्यात्सर्वरत्नोदकैः शुभैः ॥
सर्वगन्धविमि[3]श्रैश्च मनोज्ञ सुखशीतलैः ॥
एवं मां स्नापयित्वा तु मम शास्त्रविशारदः ॥
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

[4]आकाशप्रकाश,[5]जगत्प्रकाश, आशासु सर्वासु

---

१ °थ । पेवनं पवनभावमथ पनन्तपवद्द्यं तिष्ठति मनोभयवान् पुरुषोत्तमायेति सूक्तं–क. २ सूक्तं । ततो दद्यात् सर्वरत्नोदकैश्शुभैः–ने; स. ३ °लं च मनोज्ञं च सुशीतलम्–क. ४ प्राकाशप्रकाश आशासु वचनमुपासं एतेन मन्त्रेण–क; ओं आकाश–स. ५ जगत्प्रकाश विज्ञानमयानन्दमय त्रैलोक्य-नाथात्रागच्छ, इह सन्तिष्ठतु भवान् पुरुषोत्तम मामत्र" इति सूत्रम् ॥ (मु. व. पु., १८४, १०)

एतेन मन्त्रेण कृताधिवासः सम्पूजितस्तिष्ठस्व लोकनाथ ॥
अपदपदमहापद[1]उत्तिष्ठ भगवन्नमः पुरुषोत्तमायेति सूत्रम् ॥
एवं संस्थापनं कृत्वा मम शास्त्रानुसारतः ॥
पूर्वन्यायेन मां तत्र गन्धमाल्यैः समर्चयेत् ॥
ममार्चनविधिं कृत्वा सुगन्धैः पुष्पदामभिः ॥
शुक्लवस्त्रं समादाय इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः** ॥

[2]ॐ एकभूत........गृह्णीष्व वस्त्राणि मे
मन्त्रमुपागतस्तिष्ठस्व भूतनाथ ॥
पूतः पवित्रः स तु सर्व[3]सिद्धः ॥
परापरश्चाप्रमेयाय नमः पुरुषोत्तमायेति सूक्तम् ॥
वस्त्रैर्विभूषितं कृत्वा मम कर्मपरायणः ॥
[4]यथा न्यायेन मे शीघ्रमर्चनं तत्र कारयेत् ॥
आर्चितालङ्कृते कृत्वा सुगन्धं धूपमिश्रितम् ॥
पूर्वं न्यायेन मे दद्यात्प्रापणं लोकभावनम् ॥
दत्त्वा तु प्रापणं ह्येवं दद्यादाचमनं विभोः ॥
गोब्राह्मणशिवार्थाय शान्तिमन्त्रमुदाहरेत् ॥

**मन्त्रः** ॥

ॐ शान्तिर्देवानां शान्तिर्विप्राणां
शान्तीराज्ञः सराष्ट्रकस्य ॥

---

१ °द अनन्त उत्तिष्ठ–क.
२ शुद्धस्त्वमात्मा पुरुषः पुराणः
जगत्सु तत्त्वं सुरलोकनाथ ।
वस्त्राणि गृह्णीष्व मम प्रियाणि
नमोऽस्तु तस्मै पुरुषोत्तमाय–मु. व. पु., १८४, १२ ३ °शुद्धः–ने. ४ पूर्वन्या°–क.

शान्तिर्बालकानां व्रीहिपण्यानां शान्तिः ॥
शान्तिरथ [1]गर्भिणीनां च [देहिनाम्] ॥
एवं [2]शान्तिमुपागम्य यष्टुरस्य यशोधने ॥
गुरुं भागवतं चैवमर्चयेच्च यथोदितम् ॥
एवं सम्पूजितान् कृत्वा मम शास्त्रानुसारिणः ॥
ब्राह्मणान् भोजयेत्तत्र यथोत्पन्नेन माधवि ॥
ततः शान्त्युदकं कार्यं ब्राह्मणेभ्यो वसुन्धरे ॥
मूर्ध्नि शान्त्युदकं दद्याद्यदीच्छेत्सिद्धिमुत्तमम् ॥
सर्वान् पूज्य विसर्ज्यित्वा कुर्यात्पादाभिवादनम् ॥
गुरुं सम्पूजयेत्पश्चाद्दानैः संस्करणेन च ॥
तेनाऽहं पूजितो भूमि सत्यं सत्यं ब्रवीमि ते ॥
गुरुर्यस्य न तुष्टो वै मम सत्यकृतेन वा[3] ॥
नाऽहं तत्रावतिष्ठामि पुनः सत्यं ब्रवीमि ते ॥
य एतेन विधानेन कुर्यात्संस्थापनं मम ॥
तारितानि कुलानि तेन नवतिः सप्तविंशतिः ॥
एतत्ते कथितं भद्रे ताम्रार्चा स्थापनं मम ॥
कथयिष्यामि ते हीदं कांस्यी यत्र प्रवर्तते ॥
यावन्ति जलबिन्दूनि मम स्नानेषु सुन्दरि ॥
तावद्वर्षसहस्राणि मम लोके महीयते[4] ॥

**इति [5]ताम्रप्रतिमा स्थापनम् ॥**

---

१ गर्भिणीनां च देहिनाम्–मु. व. पु., १८४, १६ २ शान्तिप्रयागस्य यष्टारस्य तपोधने–क.
३ च–क. ४ १८४ अध्यायस्समाप्तः । ५ ताम्रार्चा स्थापनम्–क; स.

## अथ कांस्यप्रतिमा स्थापनम् ॥

[1]कांस्यीं तु प्रतिमां कृत्वा सुरूपां सुनिरूपिताम् ॥
सर्वाङ्गावयवैर्युक्तां विमलां [2]कर्मिनिर्मिताम् ॥
तां तु ज्येष्ठासु नक्षत्रे मम वेश्मन्युपानयेत् ॥
गीतवादित्रशब्देन शङ्खतूर्यरवैस्तथा ॥
अर्घं गृह्य यथान्यायमिमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

योऽसौ भवान् सर्वयज्ञेषु पूज्यो
ध्येयो गोप्ता विश्वकायो महात्मा[3]
प्रसन्नात्मा भगवान् मे प्रसन्नः
सम्पूजितस्तिष्ठ हि लोकनाथ ॥
अर्घं दत्त्वा यथान्यायं स्थाप[4]येदुत्तरा[5]मुखम् ॥
यथान्यायेन स्थापयित्वाऽर्च[6]यित्वा ततः पुनः ॥
कृत्वाऽधिवासनं पूर्वं महासन्निधिकारकम् ॥
चत्वारः कलशाश्चैव पञ्चगव्यसमायुताः ॥
सर्वग[7]न्धांश्च लाजांश्च प्रियङ्गुकेसराणि च ॥
ततश्चास्तंगते सूर्ये शुद्धैर्भागवतैः सह ॥
स्नपनं कुरुते भूमि [8]मम स्थापनजां क्रियाम् ॥
गृहीत्वा कलशांस्तत्र शुद्धो भागवतस्तथा ॥
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदाहरेत् ॥

---

१ १८५. अध्यायारम्भः    २ कर्म निश्चितः–क.    ३ विश्वकामो महात्मा–मु. व. पु., १८५., ३    ४ °येनु उदङ्मुखः–क; स्थापयेत्तदुदङ्मुखः–मु. व. पु. १८५. ४    ५ °मुखे–ने.    ६ कुर्य्याच्चैवाधिवासनम्–मु. व. पु. १८५. ४    ७ °न्धाश्च लाजाश्च–क.    ८ मम संस्थापनं क्रिया–क.

**मन्त्रः ॥**

ॐ आदिर्भवान् ब्रह्म[1]युगान्तरूपः

सर्वेषु कालेष्वपि [2]कल्पभूतः ॥

एको भवा[3]न्नास्ति कश्चिद्द्वितीय-

उपागतस्तिष्ठ हि लोकनाथ ॥

[4]अकार मकार च्छन्दोरूप क्षरमक्षर धृतिरूपमिति नमः पुरुषोत्तमायेति सूक्तम् ॥

व्यतीतायान्तु शर्वर्यामुदिते तु दिवाकरे ॥

श्वेतेन तु मुहूर्तेन प्राप्ते [5]काले शुभोत्तरे ॥

पूर्वोक्तेन विधानेन मम शास्त्रानुदर्शनः ॥

स्थापयेद् द्वारमूलेषु वेश्मनो मम सुन्दरि ॥

स चन्दनोदकं गृह्य सर्वं गन्धफलानि च ॥

नमो नारायणेत्युक्त्वा इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

ॐ इन्द्रो भवाँस्त्वं च यमः कुबेरो

जलेश्वरः सोम बृहस्प[6]तीश्च ॥

शुक्रः शनैश्चरः राहुर्बुधश्च

आदित्य अग्निस्त्वं शीतरश्मिस्तथैव ॥

[7]तथैव सर्वौषयो जलानि

मारुतः सर्वशरीरः शास्ता

देहे वसन्तो नमः [8]पुरुषोत्तमायेति सूक्तम् ॥

---

१ प्रशान्तरूपः–क. २ तुल्यभूतः–क. ३ °नास्ति कश्चिद्द्वितीयतया सन्तिष्ठसि लो°–क.
४ कारः विकारः अकारः आकारः मकारः पद्मकारः शकारः छन्दसिरूपः क्षरमक्षररूपमिति–क; विकार अविकार अकार सकार शकार षकार स्वच्छन्दरूपः क्षरमक्षरं धृतिरूपः अरूपमिति नमः पुरुषोत्तमायेति सूत्रम् ॥ मु. व. पु , १०३२ ५ मूलेषु चोत्तरे–इति मु. व. पु., १८५, ९ ६ °ती च–ने; स.
७ सर्वौषधिरेवत्वं मरुतः सर्वेश–क;

तथैव सर्वौषधयो जलानि, वायुश्च पृथ्वी च सवायुसारथिः ।
नागाः सयक्षाश्च दिशश्च सर्वाः तस्मै नमस्ते पुरुषोत्तमाय ॥

इति सूत्रम्–मु. व. पु., १८५, १३ (पृ. १०३४) ८ पर इति सूक्तं–क.

सर्वदेवनमस्कारं मन्त्रेणानेन कारयेत् ॥
तत एतेन मन्त्रेण कृत्वा कर्म सुदुष्करम् ॥
अप्रमादेन च तथा मम वेश्म प्रवेशयेत् ॥
प्रवेशयित्वा तद्वेश्म एकान्ते मम कर्मकृत् ॥
स्नपनं च यथान्यायं यथा दोषो न विद्यते ॥
निर्दोषं तु ततो ज्ञात्वा [1]सव्यं पार्श्वं [2]ततो नयेत् ॥
सर्वरत्नसमायुक्तं सर्वगन्धोदकेन च ॥
चतुरः कलशांस्तत्र मम शास्त्रानुसारिणः ॥
पूर्वन्यायेन [3]मां तत्र अर्चयित्वा यथोदितम् ॥
अर्चितालङ्कृतं कृत्वा माल्यगन्धादिलेपनैः ॥
पश्चाद्वस्त्राणि मे दद्यान्मम गात्रविभूषणम् ॥
आनयित्वा ततस्तत्र स्थापयित्वा ममाग्रतः ॥
उभौ तु चरणौ नत्वा इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

[4]ॐ वस्त्राणि वस्त्रभूतसर्वेषु भूतेषु च लब्ध वस्त्राणि गृह्णीष्व च लोकनाथ ॥
वेदोपवेद-ऋग्वेद-यजुर्वेद-सामवेद-अथर्ववेद संस्तुते नमः परम्परायेति सूक्तम् ॥

अर्चितालङ्कृतं कृत्वा [5]सर्वभावेन सुन्दरि ॥
पश्चान्मे प्रापणं दद्यान्मन्त्रवद्विधिपूर्वकम् ॥
प्रापणे तु कृते तत्र पूर्वमन्त्रसमन्विते ॥
पश्चादाचमनं दद्यात्शान्तिं चोत्तरां तथा ॥
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदाहरेत् ॥

---

१ सर्वं पार्श्वमथानयेत्—क. २ तथा—ने. ३ मात्रा तु—क. ४ ओं आवस्त्रलब्धांतरवस्त्ररुपे सर्वेषु भूतेषु च लब्ध वस्त्रवस्त्राणि संगृह्णन्तु वश्ये वस्त्रम् गृहतिष्ठ स्वलोकनाथ । वेदोपवेदसामवेद ऋग्वेद यजुर्वेदिति नमः परं परायण इति सूक्तं—क. ५ पूर्वन्यायेन—क; ने; स.

**मन्त्रः ॥**

ॐ [1]कुर्वतो ब्राह्मणाश्च वर्णाश्चत्वारो ये महाश्चाष्ट एव सर्वे तत्र सरितः [2]सागराश्च कुर्वतो ये मया पूर्वमुक्ताः ॥ [3]आर्यासाध्य कामदधामदं ॐ नमः पुरुषोत्तमयेति सूक्तम् ॥

वृत्तेष्वेवोपचारेषु मम कुर्यात्प्रदक्षिणम् ॥
अभिवादनं च मे कुर्यात्कुर्यात्सर्वाभिवादनम् ॥
तत्तु कृत्वा यथान्यायं पूज्यो भागवतः शुचिः ॥
तेषां सम्पूजनं कृत्वा पूजनीया द्विजातयः ॥
तेषां शान्त्युदकं गृह्य [4]द्विजानां कमलेक्षणे ॥
दद्यादभ्युक्षणं मह्यं तेनाहं पूजितोऽभवम् ॥
सर्वान्विसर्जयित्वा तु यथा ते समुपागताः ॥
गुरुं सम्पूजयेत्तत्र दानसम्मानैस्तथा ॥
यो गुरुं पूजयेद्भक्त्या भूमिदानेन सुन्दरि ॥
तेनाहं पूजितो भूमि एवमेतन्न संशयः ॥
ब्राह्मणान् मम भक्तांश्च गुरूं नैवाभिनन्दति ॥
नाशयामि न सन्देहः सत्यं सत्यं ब्रवीमि ते ॥
यावन्ति जलबिन्दूनि मम गात्रेषु तिष्ठति ॥
तावद्वर्षसहस्राणि स्थापको मयि संस्थितः ॥
य एतेन विधानेन भूमि संस्थापयेन्मम ॥
तारितं स्वकुलं तेन एवमेतन्न संशयः ॥
एतत्ते कथितं भद्रे [5]कांस्यार्चा स्थापनं मया ॥
कथयिष्यामि ते [6]ह्येवं रूपं यत्तत्प्रवर्तते[7] ॥

## इति कांस्यार्चा स्थापनम् ॥

---

१ कुर्वन्तो ब्रह्म च ब्राह्मणाश्च वर्णाश्च–क; कुर्वन्तो–ने; स. २ आगरश्च कुर्वन्तो–क; सागराश्च कुर्वन्तो–स. ३ आयाम आयामव्योम कामधनवाम ओं नमः स्वरो स तु इति सूक्तं–क. ४ द्विजातीनामलेक्षणे–क. ५ मम गात्रेषु संस्थापनं–क. ६ मह्यं–क. ७ मु. व. पु., १८५ अध्यायस्समाप्तः

## अथ रौप्यसौवर्णप्रतिमास्थापनम्[1] ॥

राजतीं प्रतिमां [2]कृत्वा सुरूपां निर्मलां शुचिः ॥
अश्लिष्टां चैव निर्दोषां सर्वतः [3]परिवेष्टिताम् ॥
चन्द्रपाण्डुरसङ्काशां सुश्लक्ष्णां निर्व्रणां शुभाम् ॥
श्रिया युक्तां मनोज्ञां च दीप्यमानां दिशो दश ॥
ईदृशीं प्रतिमां कृत्वा मम कर्मपरायणः ॥
अर्घं गृह्य च सम्पूज्य इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः** ॥

[4]ॐ यः सर्वलोके प्रतिलब्धमर्घ्यैः पूज्यश्च मान्यश्च दिवौकसामपि ॥
उपागतो गृह्य इदं ममार्घ्यं प्रसी[5]द सन्तिष्ठस्व लोकनाथ ॥
यो राजते [6]धर्मपतिश्च यज्ञे सूर्यो यमः कर्माग्निहोत्रम् ॥

मन्त्रश्चेति आदिमध्यस्वरूपायेति सूक्तम् ॥

तत एतेन मन्त्रेण अर्घं दत्त्वा यथा[7]विधि ॥
विनतो बहुतोयैश्च स्थापयेदुत्तरामु[8]खम् ॥
आश्लेषासु च नक्षत्रे राशौ कर्कटके स्थिते ॥
अस्तङ्गते दिनकरे जपति स्वजने तदा ॥
तत्राधिवासनं कुर्याद्विधिवन्मन्त्रनिश्चितम् ॥
चत्वारः कलशास्तत्र चन्दनोदकपूरिताः ॥
सर्वगन्धैश्च रत्नैश्च सहकारविभूषिताः ॥
ततस्ते कर्मिणः सर्वे मम शास्त्रानुसारिणः ॥

---

१ मु. व. पु., १८६ अध्यायः  २ °त्वा मम कर्म परायणः–क.  ३ परिनिष्ठिताम्–स; मु. व. पु. १८६. १  ४ ओं यः सर्वलोकेष्वपि लब्धपूज्यश्च दिवौकसानाम्–स.  ५ °दमा–क.  ६ यज्ञगतिं च–स.  ७ °बलि–क.  ८ °खः–क.

[1]गुरुस्तु चन्दनं देवि मनोज्ञं सुखशीतलम् ॥
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः** ॥

ॐ योऽ[2]सौ भवान् [3]सर्वलोकैककर्त्ता आयातु लोकनाथ ॥
मेरुध्रुवतारका [4]अक्षररूप ॥ क्षमादमः कालकलामुहूर्ता ऊर्ध्वान्यधो मोक्ष मे ॥
व्यतीतायां तु शर्वर्यामुदिते सूर्यमण्डले ॥
दिशासु च प्रसन्नासु [5]द्वारमूलेषु स्थापयेत् ॥
एवं संस्थापनं कृत्वा मम शास्त्रानुसारिणः ॥
घटैः पूर्णैर्यथान्यायं [6]कुर्युस्तत्राभिषेचनम् ॥
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदाहरेत् ॥
[7]ॐ योऽसौ [8]गगनाय सुरभिलोकः
संदृश्यते नैव [9]प्रणश्यते यः ॥
अदृ[10]ष्ट नष्टश्च गृहागमेति
सानुग्रहस्तिष्ठस्व लोकनाथ ॥

परः पराणां [11]वा परायणं हन्ता हर्त्ता परिवर्त्यमानश्चेति ॥

[12]नमः अनन्तायेति सूक्तम् ॥

ततोऽभिषेचनं कृत्वा मम शास्त्रानुसारिणः ॥
ततस्तूर्णीं विनीतश्च वेदिमध्येऽवस्थापयेत् ॥

---

१ गुरोस्तु वचनाद्देवि मनज्ञान् सुखशीतलान् । मु. व. पु., १८६, ९  २ °सौ खसर्वोरगसर्वलोका सम्भावना स्थापनागणश्च । आयातु आयातु सलोकनाथ मेरुध्रुवस्थरकाथरुपोक्षमादयः कालाकालमुहूर्तं तचानयवमोक्षमे प्रश्नः–क.  ३ सर्वाध्यक्षः सर्वरूपैकरूपः । आयातु मूर्त्तौ सहितो मया च, ध्रुवादिभिर्लोकपालैस्तु पूज्यः ॥ मु. व. पु., १८६, १०  ४ अक्षरूप–स.  ५ द्वारमूले तु–स.  ६ कार्यं तत्रा°–क.  ७ मन्त्रः । ओं गगनाय–स.  ८ गवानासयसुरभिलोकः–नें.  ९ प्रणम्यते–क.  १० °ष्टानष्टश्चैतु गृहागमेति–क.  ११ च परायणं च–क.  १२ धनजन रूप्यस्वर्णं अनन्ताय नमः इति सूत्रम्–मु. व. पु., १८६, १७

ततो मां सर्वतः पश्येत्सर्वैर्दवैर्विवर्जितम्[1] ॥
द्युतिमान् मतिमांश्चैव विधिमन्त्रेण स्थापयेत् ॥
पुनः कर्तव्यं मे भूमि स्थापनं[2] चाति शोभनम् ॥
येनाहं चात्रतिष्ठामि मन्त्रपूतेन सम्मतम् ॥
कलशांस्ततो गृहीत्वा [3]यथान्यायेन पूरितान् ॥
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

ॐ [4]यो वेदवेदाङ्गवराभिषिक्तो
सर्वेषु यज्ञेष्वपि भागभोक्ता ॥
इज्यो यथा यजमानस्य यो वै
ममानुग्रहाय तिष्ठस्व लोकनाथ ॥
[5]वरवर पवन मनः संवरण, नमः पुरुषोत्तमायेति सूक्तम् ॥
एवं संस्थापनं कृत्वा प्रहृष्टे नान्तरात्मना ॥
अर्चयति यथान्यायं [6]यन्मयापूर्वभाषितम् ॥
अर्चितालङ्कृतं कृत्वा हृष्टपुष्टमनास्तथा ॥
[7]श्वेतवस्त्राणि मे दद्यात्प्रियं च मम भूषणम् ॥
ततो वस्त्रमुपादाय जानुभ्यां निपतेद्भुवि ॥
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदाहरेत् ॥

**मन्त्रः ॥**

ॐ योऽसौ भवांश्चन्द्र[8]किरणप्रकाशः

---

१ °देहैर्विवर्जितः–क. २ चाथ–क; चापशोभनम्–स. ३ यथान्वयेन पूरितान्–स.
४ यो वेदाङ्गधराभि–क;
वेदैर्वेद्यो वेदविद्भिश्च पूज्यो
यज्ञात्मको यज्ञफलप्रदाता ।
यज्ञार्थं त्वामाह्वये देवदेव
मूर्तावस्थान्तिष्ठ सुलोकनाथ–इति मु. व. पु. १८३, १६ (पृ. १०३६);
५ चरचर भुवनप्रलयमनः संचरणकारणकारतो नतश्चेति नमः–क. ६ पूर्वोक्तविधिना नरः–मु. व. पु. १८६, १७ ७ नीलवस्त्राणि–मु. व. पु. १८६, १७ ८ °रश्मि°–मु. व. पु., १०४०

[1]शङ्खस्य कुन्दस्य च वर्णचोरः ॥
[2]क्षीरोदधिकौमुदवर्ण देव
वस्त्राणि गृह्णीष्व च लोकनाथ ॥

वेषः सुवेषः [3]सुलभ-दुर्लभ श्रेष्ठ सुवर्चा इति नमो नारायणेति सूक्तम् ॥

तत एतेन मन्त्रेण कृत्वा च वस्त्रलङ्घनम् ॥
ततो मे प्रापणं दद्या[4]त्कुण्डले तारणे शुभे ॥
दत्त्वा तु प्रापणं ह्येवमाचार्यः शास्त्रसंयुतः ॥
सर्वलोकहितार्थाय शान्तिमन्त्रमुदाहरेत् ॥

**मन्त्रः ।**

ॐ योऽसौ ब्रह्मा देवस्य पुरः शान्तिरुद्रस्य विष्णोः[5] ॥
शान्तिः लोकानां[6] ये मया पूर्वमुक्ताः ॥
अचल चञ्चल-खेवल-तरल-प्रचल-अरविन्द [7]प्रभोते नमः
संस्थापितो वासुदेव इति सूक्तम् ॥
एवं शान्तिं ततः कृत्वा सर्वपापप्रणाशिनीम् ॥
पूज्य भागवतांस्तत्र यथान्यायेन [8]सात्त्विकान् ॥
ततः सम्पूजनं कृत्वा मम भक्त्या व्यवस्थितः ॥
ब्राह्मणान् पूजयेत्तत्र [9]प्रयत्नेन च भोजयेत् ।
ततः सम्पूज्य विप्राणां गृह्य शान्त्युदकं शुभम् ॥
कुर्यादभ्युक्षणं तत्र मम कर्म सुखावहम् ॥
ब्राह्मणान्स्वजनांश्चैव अभिवाद्य कृताञ्जलिः ॥

---

१ शङ्खेन कुन्देन समानवर्गः–मु. व. पु., पृ. १०४० २ क्षीरोदधि–स; क्षीरोज्ज्वलः–मु. व. पु., १०४० ३ अनन्तः अमरः मारणः कारणः सुलभः दुर्लभः श्रेष्ठः सवर्चा इति सूत्रम्–मु. व. पु., पृ. १०४० ४ भक्तियुक्तेन तेजसा–मु. व. पु., पृ. १०४० ५ °सुराशान्तिरू°–क. ६ °ष्णौ क्रियतरात्रे शान्ति लोकाना–क. ७ युगेत नमः–क; प्रभेति नमः–ने; स. ८ सत्कृतान्–क; ने; स. ९ च उपपन्नेन भोज°–क.

शीघ्रं विसर्जयेत्तत्र ये तथा समुपागताः ॥
[1]विसर्ज्य वचनं सर्वं गुरुं तत्र प्रपूजयेत् ॥
स मानदानसत्कारैर्न आच्छा[2]दनकैः ॥
गुरुं सम्पूजयेद्भूमि ब्राह्मणांश्च मम प्रियान् ॥
भक्तिभिर्भक्तियुक्तांश्च तैश्चाल[3] मतिपूजितः ॥
यावन्ति जलबिन्दूनि मम गात्रेषु योजयेत् ॥
तावद्वर्षसहस्राणि विष्णुलोकेषु तिष्ठति ॥
य एतेन विधानेन भूमिसंस्थापयेन्मम ॥
तारिताः स्वकुलास्तेन मम कर्मसु सम्मिताः ॥
एतत्ते कथितं भद्रे रौप्यार्चा स्थापनं मया ॥
सौवर्णस्य च वक्ष्यामि स्थापनं [4]भूमि मे प्रियम्[5] ॥

**इति रौप्यार्चा-स्थापनम् ॥**

---

१ विसर्ज्य च जनं सर्वं-स. २ °दनपानकं क. ३ °लं प्रतिपूजकः-क.; तैश्चालं प्रतिपूजितः-ने; स. ४ मम यत्प्रियं अथ देवी प्रतिष्ठा-क. ५ १८६ अध्याये २४ अस्मिन्नध्याय एव सौवर्णार्चाया अप्यनुवर्तमानत्वात् तस्या अत्र अनिरूपणे कारणं विमर्शकैः विमारणीयं.

# अथ देवीप्रतिष्ठा ॥ १४ ॥

## । दशभुजादेवीप्रतिष्ठा ।

[ तत्र ] देवीपुराणे—

[1]गङ्गा नर्मदा विन्ध्याद्रौ उज्जयिन्यथवाऽर्बुदे ॥
हिमवन्निरघे द्रोणे सान्निध्ये तिष्ठते शिवा ॥
नदीतीरे चतुर्मार्गे रथ्यापितृवनेषु च ॥
स्थापिता तु भवेद्देवी सर्वकामार्थसिद्धिदा ॥
मारणे शत्रुवर्गस्य पितृस्थाने सदार्चिता ॥
एकलिङ्गे द्रुमे शैले गृहे गोष्ठे त्रिकण्टके ॥
पूजिता द्रव्यपुत्रायुः सुखदाऽऽरोग्यदा भवेत् ॥
[2]सर्वदा सर्वगा देवी मोक्षदा पूजिता मतम् ॥

तथा

हेमराजत[3]मृद्धार्क्षी शैलचित्रायसापि वा ॥
शक्ति[4]शूले स्थिता देवी सर्वकामफलप्रदा ॥
यद्यस्य आयुधं प्रोक्तं तस्मिंस्तं पूजयेत्ततः ॥
देवी शक्त्यर्चिता पुंसां राज्यायुः सुखसौख्यदा ॥
याम्ये ब्रह्मा भवेत्कोटौ रक्तवर्णो रजोमयः ॥
मध्ये रुद्रो [5]ऋभुः शुक्लो वामे कृष्णतमो हरिः ॥
वेदयज्ञग्रहानामलोकेशाः सचराचराः ॥
शूले सम्पूजिते वत्स सर्वं भवति पूजि[6]तः ॥

---

१ नागा—क. २ तथा च सर्वदा देवी—क. ३ °मृद्धाक्षी-स. ४ °शूलैर्विना देवी-क. ५ क्रतुः शुक्लौ—स. ६ °तम्—ने; स.

वार्क्षीं वा शैलजां वापि रत्नधातुमयीमपि ॥
विधिना शास्त्रदृष्टेन दशबाहुं त्रिलोचनाम् ॥
कारयेद्भक्तिमान्यस्तु[1] देवीं शास्त्रविशारदः ॥
सर्वलक्षणसम्पूर्णां सर्वाभरणभूषिताम् ॥
राजतीमुत्तमाङ्गेन कबरी लम्बितेन च ॥
[2]स्निग्धकुञ्चितभारेण धम्मिल्लेन सितेन च ॥
व्यामिश्रेण सितैः पुष्पैर्लिप्तक्त्येव संस्थिताम् ॥
तमो [3]नुदन्तो वक्त्रेण तिरस्कृतनिशाकराम् ॥
आयतैः कर्णमर्यादैस्तरला लोलनिर्मितैः ॥
भ्रूक्षेपादुल्लस[4]त्पक्ष्मै ऋजुजिह्वावलोकितैः ॥
भ्रूभङ्गचापदण्डेन भिन्दन्तीं दृष्टिसायकैः ॥
मध्योन्नतसमायातामधरेण विराजिताम् ॥
आरक्तविद्रुमाभेन किञ्चित्स.... [5]स्मितानना ॥
दन्तमयूखज्योत्स्नाभिर्भासमाना तडिद्यथा ॥
[6]त्रिरेखकन्धरा भाति ग्रैवेयकविभूषिता ॥
कठिनस्तनभारेण [7]सम्नतौ तावरम्भकौ ॥
स्तनौ समुन्नतौ पीनौ वक्षः पीनोन्नतं शुभम् ॥
भूषिता [8]स्तनमध्येन [9]मध्ये च त्रिवलीभृता ॥
रोमराजी नितम्बार्द्धमनङ्गाङ्कु[10]सूचितम् ॥
केयूरनागबन्धेन ह्यङ्गदैः रत्नकाञ्चनैः ॥
[11]ग्रैवेयककिरीटेर्द्धे अविकेन विशेषकम् ॥

---

१ °मानस्तु–क. २ °कुञ्चलभा°–क; स्निग्ध कुन्तलभारेण–ने; म. ३ वदन्ती युक्तेन–क; नुदन्ती–स. ४ °ल्लसत्पक्ष्मैर्ऋजुजिह्वावलोकितैः–स. ५ °स्मिताशतानना–क. ६ त्रि ट पंचमूले तु–क. ७ संसक्तौ–ने. ८ तनु°–ने; स. ९ त्रिवलीत्रयभूषिता–क. १० °सूत्रिवर।...लाकाय रम्भागर्तोरुकन्दला। गूढगुल्फा च पक्ष्मभौ पद्माङ्कितमनूपुरौ ततश्च हार-मालाढ्य° ब्रह्मसूत्रेण राजितम्। केयूरनाग–क.

विराजिता तृतीयेन भाल्के लोचनेन च ॥
राजन्ती पीत[1]वस्त्रेण स्फुरितारुणरेणुका ॥
द्विभुजाद्या च विंशाद्यां यावद्दोर्दण्डशालिना ।
असिखेटकहस्ताभ्यां गदादण्डेन चाऽपरौ ॥
शरचापेऽपराभ्यां च [2]ऋष्टिमुद्गरिणौ परौ ॥
शङ्खघण्टान्वितौ चाऽन्यौ ध्वजचामरौ परौ ॥
परशुचक्रधरौ चान्यौ सर्वादर्शिनौ परौ ॥
शक्तिकुन्तधृतौ चाऽन्यौ हलमुसलिनौ परौ ॥
[3]परशुतोमरमन्याभ्यां ढक्कापणविनौ परौ ॥
तर्जयन्त्यपरे [4]नीरकृतकोलाहला: परे ॥
अभयस्वस्तिके द्वाभ्यामष्टाविंशभुजा शिवा ॥
शुभ्रव्याघ्रासनस्था तु सिंहासनमधिष्ठिता ॥
महिषघ्नी शिरश्छेदा [5]नरं शस्त्रोग्रपाणिना ॥
गर्जमानं हतं मूर्ध्नि नागपाशेन वेष्टितम् ॥
उपघ्नन्तीं रिपुं देवी पूजनीया पुरन्दर ॥
स्थापिता पूजिता शक्र [6]स्मरिता पाठिताऽपि वा ॥
प्रयच्छति शुभान् कामान् मनोभीष्टान्यजन्नरः ॥
पक्केष्टे शैलकाष्टे वा मृन्मये वाऽपि वासव[7] ॥
शुक्लवासाः शुचिः [8]स्नात्वा कामक्रोधविवर्जितः ॥
सर्वसंज्ञोज्झितः प्रीतस्तन्मनाभावभावितः ॥
पुष्पगन्धोपहारैश्च हविष्यान्नैरनेकशः ॥
तिलसर्पिर्यवान् हुत्वा सर्वमङ्गलमन्त्रितान् ॥

---

१ °वासेन-ने; °भासेन-म. २ सक्षशुद्धरिणौ परौ-क; ऋषिमुद्गरिणौ-स. ३ पाशतोमरसे ढक्क°-क. ४ नारी कृतकोलहले परे-क. ५ नवं शाखाग्रपाणिना-क; नरं-ने. ६ संस्मृता पठिताथवा-क; स्मरिता-स. ७ °र-क. ८ शुद्धो-क.

वस्त्रहेमाम्बुसंवीतैः कलशैः स्नपयेच्छिवाम् ॥
ततस्तु शास्त्रविज्ञैश्च प्रतिष्ठां तत्र कारयेत् ॥
देवी शास्त्रार्थ[1]तत्त्वज्ञैर्मातृमण्डल[2]वेदकैः ॥
[3]भूततन्त्रगृहावालगारुडेषु कृतश्रमैः ॥
प्रतिष्ठाप्य शिवां तैस्तु यथा शक्त्या तु दक्षयेत् ॥
पूजयेद्ब्राह्मणान् शक्र कन्या बालांस्तथैव च ॥
दीनान्धविकलान् सर्वान् यथाशक्त्या क्षमापयेत् ॥
ततस्ते स्वस्तिवाच्यं तु मङ्गला प्रीयतां मम ॥
सुखं तिष्ठन्तु राजानो [4]गोब्राह्मणगणस्तथा ॥
क्षत्रविट्शूद्रबालेभ्यः सर्वशान्ति[5]करा भव ॥
[6]तथा स्तवेन चान्येन शिवगीतेन तोषयेत् ॥

## इति [7]दशभुजादेवीप्रतिष्ठा ॥

---

## अथ मातॄणां प्रतिष्ठा ॥

**अगस्त्य उवाच ॥**

पुरे वा यदि वा ग्रामे नगरे खेटकेऽपि वा ॥
मातरः पूजनीयास्तु दृष्टादृष्टफला[8]र्थिभिः ॥
एकलिङ्गे [9]द्रुमे शैले नदीतीरे वनेऽपि वा ॥

---

१ °तन्त्रज्ञैः-क. २ °वेदकैः-क. ३ भूततन्त्रग्रहे बाले मारुतेष्टिकृतश्रमैः-क.
४ गावो वै ब्राह्मणास्तथा-क. ५ °करी भव-क; °करा भव-ने.
६ सर्वान् कामान् प्रयच्छस्व ये जनानां तु कामिकाः । तथास्तवेन-क;
सर्वान् कामान् प्रयच्छध्वं यजमानाय कामिकम् । तथा-स.
७ दशभुजादिदेवी प्रतिष्ठा-ने; स. ८ °ना-क. ९ नदीतीरे द्रुमे शैले वनेऽपि वा-क.

पूजिताः सर्वविद्यानां साधकाय फल[1]प्रदाः ॥

कालान्तरप्रदा देव्या सर्वाः सर्वत्रपूजिताः ॥

कालाग्नि[2]रिव पर्यन्तां तासां व्याप्तिसुपुत्रदाः ॥

नगरद्वारपौरादि[3]वृद्धिराज्यसुखार्थदाः ॥

गङ्गातीरेऽथवा विन्ध्ये सर्वकामफलप्रदाः ॥

वेदपर्वतलक्ष्म्यादि किष्किन्धा अर्बुदादिषु ॥

स्वर्गदा मोक्षदा वत्स निष्कामा फलवाञ्छिता ॥

एते [4]स्थानाः समाख्याता समीहितफलप्रदाः[5] ॥

यासां कालाग्निशिवपर्यन्तां यासां व्याप्तिर्महात्मनाम् ॥

ता यत्र यत्र पूज्यन्ते तत्रैव फलदायिकाः ॥

तदर्थं शुभऋक्षाहे दार्वानीय तु बुद्धिमान् ॥

मणिमौक्तिकवैडूर्यकाष्टचन्दनचन्दनाः ॥

मधूकपार्थबिल्वाम्रशाकशिंशिपतिन्दुकाः ॥

शैलपार्थिवहेमोत्था तारताम्राः शुभप्रदाः ॥

[6]तद्वैर्देर्घटिता वत्स तद्वैश्चैव प्रतिष्ठिताः ॥

ताश्चोत्त[7]राननाः स्थाप्याः सर्वकामफलेप्सुभिः ॥

सर्वां शैलेष्टकाष्ठोत्थं मठं वास्तुविभाजितम् ॥

वलभीमण्डपं वत्स [8]मठे वा स्थापनं शुभम् ॥

गन्धनैवेद्यधूपेन मणिमाल्यविभूषणैः ॥

---

१ प्रदाः । गृहचत्वरभद्रन्ते पूजिता धनपुत्रदा ।
नगरद्वारि पौरादि वृद्धिरष्टसुखावहाः–क.

२ °शिवपर्यन्तां–ने. ३ °दि किष्किन्धा अर्बुदादिषु स्वर्गदा etc.–ने; स. ४ °षु ताः समा–क.

५ °दाः । कालान्तराप्रदा देव्यः सर्वास्सवैत्रपूजिताः ।
कालाग्निशिवपर्यन्ता यासां व्याप्तिर्महात्मनां–क.

६ तद्विधैर्घटिता वत्स तज्ज्ञैश्चापि प्रतिष्ठिताः–क; तद्विदैर्घटिता वत्स तज्ज्ञैश्चैव–स. ७ °रायणे–क.

८ मतं–क.

अधिवासनपूर्वं तु प्रतिष्ठा[1]प्यास्तु तद्विधैः ॥
वेदध्वनिमहाघोषैः स्त्रीसङ्गीतोपशोभितम् ।
कर्तव्यं स्थापनं तासां बहुवादित्रवादितम् ॥
रात्रौ जागरणं कार्यं तत्रैव शुभमङ्गलैः ।
आख्यानैर्मातरा शास्त्रैरुद्रक्रीडाकथैः शुभैः ॥
दशावतारपूर्वास्तु यथा वाच्या यथाक्रमम् ॥
एवं तूषसि सम्प्राप्ते बलिं सन्ध्यासु दापयेत ॥
तथा मातृगणं पूज्य देवं भैरवरूपिणम् ॥
स्त्रीसङ्घाः कन्यका विप्राः पूजनीयाश्च शक्तितः ॥
मठं च कारयेत्तत्र देव्याः पूजार्थ[2]सिद्धये ॥
सर्वलक्षणसम्पूर्णं सर्वोपकरणान्वितम् ॥
वापीकूपतडागं[3] वा वाटिकावनशोभितम् ॥
[4]वेश्यातूर्योपरम्पन्नं ध्वजछत्रविभूषितम् ॥
घण्टादर्पणदीपाद्या देया द्रव्यानुरूपतः ॥
घटिका यन्त्रषष्ट्यादि दिनसङ्ख्यार्थ[5]सिद्धये ॥
कर्तव्यमेकमेकं वा यथा[6]कालं परिच्छदम् ॥
अनेन विधिना यस्तु मातरः स्थापयेन्नरः ॥
इहैव पूजनीया स्यान्मृतो याति परां गतिम् ॥
ये तस्य[7]दासकर्मान्ता दास्यो वेश्यादिका गृहे ॥
तेऽपि यान्ति दिवं वत्स किं पुनस्तस्य बान्धवाः ॥

**इति मातृणां प्रतिष्ठा ॥**

---

१ °ण्ठाप्य यथाक्रमम् । एवं प्रत्युषसि प्राप्ते बलिं सार्धं समापयेत्–क. २ °वृद्धये–क.
३ °वाद्या वाटिका°–क. ४ °र्योगमं पन्नं ध्वजं छत्रोपशोभितं–क; वेश्या तूर्योपसंपन्नं–स.
५ °दिवि–क. ६ चात्र–क. ७ दशकर्मान्ता–क.

## अथ चतुःषष्टिदेवीरूपकम् ॥

तथा दक्षिणभागे तु भैरवस्थापितः पुरे ॥
कुरुते महतीं पी[1]डामग्निदाहं सुदारुणम् ॥
विसूत्रा[2] मातरो यत्र स्थापिता भैरवस्य तु ॥
[3]कष्टा पङ्क्तियुता वाऽथ रुद्रदाहस्तदा भवेत् ॥
तस्य शान्त्यैव कुर्वीत सम्मुखीं सर्वमङ्गलाम् ॥
श्रियः कार्या विशेषेण योगक्षेमगृहे शुभाम् ।
केशवोऽप्यथवा स्थाप्यः श्रिया सार्द्धं सुरोत्तम ॥
अनेन विधिना शक्र स्थापिताः सुखदा शुभाः ॥

### [4]तथा

यत्तत्सर्वदेवाधिदेवत्वं लिङ्गरूपं शिवात्मकम् ॥
भैरवं भैरवासिद्धमव्यक्तं परमेश्वरम् ॥
कथं तत्केन विधिना कस्मिन्स्थाने [5]च पूजयेत् ॥
एतद्वेदितुमिच्छामि कथयस्व [6]प्रसादतः ॥
[7]अव्यक्तं यत्परं तेजः सर्वदेवनमस्कृतम् ॥
लिङ्गं [8]तल्लयवा तेषां सर्वशास्त्रेषु कीर्तितम् ॥
[9]तं कृत्वा लिङ्गरूपन्तु मम नाथ सुरार्चितम् ॥
आत्मभावानुसारेण नदी[10]तीरे निवेशयेत् ॥
पुरे वा दक्षिणे स्थाने गौरी वाऽथ चतुष्पदे ॥
द्वारबन्धेषु तत्स्थाने अन्यस्मिन् वा मनोरमे ॥
महाभैरव[11]मन्त्रेण स्थापयेद्भैरवं बुधः ॥

---

१ °ड्डामानुदाहं–क. २ °ता–क. ३ कमपंजिज्जुतानाथ पुरदाह°–क ४ तथा नास्ति–क. कोशे. ५ तु पूज्यते–क. ६ ममाग्रतः–क. ७ ब्रह्मोवाच । अव्यक्तं यत्परं–क ८ °गं नयनाशेषा–क. ९ ततः कृत्वा लिङ्गरूपं तु–क. १० °वेदि–क. ११ °मन्त्रीं तु–क.

भैरवेन तु तल्लिङ्गं भैरवीं सिद्धिमिच्छता ॥
अर्चितं अर्धनारीशं मङ्गला भैरवीयुतम् ॥
शिवदूत्यादि विद्याभिः कर्तव्यं परिवारितम् ॥
भैरवं [1]परमं देवं सर्व[2]कामप्रसाधनम् ॥
पूजितं मन्त्रविधिना सर्वावाप्तिफलावहम् ॥
धर्मदं चार्थदं शक्र कामदं मोक्षदं नृणाम् ॥
शान्तिदं [3]देवमायुष्यं राज्यदं सुतदं नृणाम् ॥
महासिद्धि[4]फलं लिङ्गं कूटरूपं परात्परम् ॥
जपे होमेऽर्चने [5]वाऽथ [6]परं वा नित्यसिद्धिदम् ॥
नृपाणां नृपयोषाणां कर्तव्यं सर्वदा शुभम् ॥
लिङ्गवालय[7]गृहिणं प्रसन्नं समुदाहृतम् ॥
गन्धादि फलपुष्पाद्यैः स्वादुभक्ष्यनिवेदनैः ॥
मणिहेमादि वस्त्राद्यैः पूजितं सर्वकामदम् ॥
शान्तिपुष्टिर[8]साकाजैः स्तम्भमारण सादनम् ॥
उच्चाटनं मोहनं कुर्यात् कीलनं परमेश्वरः ॥
शुद्धरूपो[9] यतो देवः स्थानभावफलप्रदः ॥
आधाराधेयरूपेण साधये[10]च्चर्हि तं नृणाम् ॥
उत्पातमकरक्षोभावुपसर्गोपशान्तिषु ॥
स्थापितः पूजितो देवो भयं हन्यान्नसंशयः ॥
प्रतिदेवपुरस्थाने प्रतिभेदेषु[11] वा नृपैः ॥

१ चरमं देवं—स. २ °कर्मप्रसाधकम्—क. ३ पुष्टिदं देवमायूराज्यसुतप्रदम्—क. ४ °प्रदं—क. ५ चाथ—ने. ६ चरं वा—क. ७ °य गृहाणां प्रशस्तं—क; 'लिङ्गवाल' इत्यारभ्य 'स्तम्भमारण सादनम्' इत्यन्तो भागः 'स' कोशे नास्ति. ८ °स चाकर्षस्तम्भमारण-मादरम्—क. ९ °पः परो देवः—क. १० °इति तं नृणां—क. ११ °थवा नृपैः—क.

कृते [१]वा पूर्वदेवानां प्रासादानां तथोच्छ्रये ॥
यद्भयं नृपराष्ट्रेषु तच्छमं याति नि[२]श्चयात् ॥
शम्भोः स्थानं परं शक्र पुरे वा नगरे क्वचित् ॥
[३]उच्छ्रायं लभते लिङ्गं न चाऽ[४]न्या प्रतिमा क्वचित् ॥
शिवा श्यामा मध्यमा देवी प्रेतसंस्था कपालिनी ।
[५]सा शूलकोदरक्षामा चर्चिका रिपुनाशिनी ॥
चण्डमुण्डविनाशाय पूजिता सुर[६]सत्तमैः ॥
[७]मदनुकृतिस्वरूपा तु कामदा स्थापिता भुवि ॥
पुरे वा नगरे वापि[८]मध्ये तद्वारगेऽपि वा ॥
नृपगेहेषु पूज्या सा सर्वकामप्रदायिका ॥
ये यजन्ति सदा लोका शैलीं कृत्वा यथाविधि ॥
[९]ते लभन्तेऽक्षयान्कोशान् यदभीष्टान् सुरोत्तम ॥
एषा देवी परा विद्या लक्ष्मीरूपा नगोपरि ॥
सर्वकामप्रदा प्रोक्ता पावके महिषोपमा ॥
शिवास्या दक्षिणाशस्ता चामुण्डा [१०]राक्षसे शुभा ॥
पश्चिमे [११]चर्चिका देवी वायव्ये मृगगा शुभा ॥
उत्तरे क्षेमदा शस्ता मङ्गला पर्वणा शुभा ।
उत्तरे क्षेमदा संस्था मङ्गलां पूर्वदा [१२]शुभाम् ।
सर्वपाप........................मध्यगः ॥
पञ्चदेव्यः प्रकर्तव्या यथाभागं व्यवस्थिताः ॥

---

१ च–क. २ °श्चितं–क. ३ न छ्रयं–क. ४ °स्य प्र°–क. ५ सशूलाकोटरा क्षामा चर्चिकारिविनाशिनी–क. ६ °सत्तम–क. ७ तदर्थ कृतिरुगा तु–क. ८ मध्यगद्वारगापि वा–क; मध्ये–ने; मध्ये तद्वा°–स. ९ ते लभन्ते हि तान् कामान् नरो भीष्टान्–क. १० राक्षसा मया क. ११ चण्डिका देवी–क. १२ सत्या यथा वामा ब्रह्मा मध्यमं तु ततः शिवः । एवं देव्यः प्रकर्तव्याः–क.

मातरः सर्वतः शस्ताः [1]शिवो याम्ये शुभावहाः ॥
पश्चिमे शस्यते ब्रह्मा उत्तरेण जनार्दनः ॥
[2]पूर्वतो भास्करः कार्यो ऐशान्यां सर्वदेवताः ॥
चतुर्मुखः [3]प्रकर्तव्यश्चतुर्मूर्तिश्च मध्यतः ॥

तथा ॥

एकै[4]का मङ्गला देवी सा उमा शक्तिरूपिणी ॥
द्विभुजादि प्रभेदेन कोटिभेदं गता पुनः ॥
तथा चतुर्विधा लोके कामदा दमनी [5]पुरा ॥
हननी....सुरा चान्या तथा च महिषासुरः ।
खड्गखेटकरा देवी पाशशूलधरा परा ॥
धनुर्बाणधरा चाऽन्या घण्टाचक्रकरा परा ॥
वज्रदण्डकरा देवी दशबाहुरथापरा ॥
[6]कार्तिका मुद्गरं कुन्तं कुठारं तर्जनी परा ॥
डमरुं वादयन्ती च शक्तिहस्ता महाबला ॥
पद्मा भयकरा देवी दर्पणं विमले करे ॥
एवं विधा सुरूपा तु सिंहस्योपरि संस्थिता ॥
महामाया प्रकर्तव्या सिंहयुग्मगता परा ॥
पद्मासनस्था वरदा नवयौवन[7]भाग्यगा ॥
सर्वाभरणशोभाढ्या जयाद्यैः परिवारिता ॥
अथवा युध्यमाना तु महिषासुरघातिनी ॥
ध्याता प्रपूजिता नित्यं सर्वकामफलप्रदा ॥
यः पुनर्है[8]मकाष्ठादेः शैलीं वा प्रतिमां शुभाम् ॥

---

१ शिवा–क. २ सर्वतः–क. ३ चतुर्मुर्तिः कर्तव्यस्स च सव्येन–क. ४ °व मङ्गला–क. ५ पुरा । कणिकामुकुरं–क. ६ कर्णिका मुकुरं–क. ७ °भारगा–क. ८ °हेत्य काष्ठादि–क.

कृत्वा पक्वेष्ट शैलाद्ये प्रासादे सन्निवेशये[1]त् ॥
स्वमन्त्रविधिना सिच्य वापीकूपजलं शुभम् ॥
आरामपुष्पशोभाढ्यं देवीमुद्दिश्य [2]तद्विधा ॥
[3]तदा निमन्त्रये नृणां मातृतन्त्रार्थं[4]भाविनीम् ॥
समस्त[5]भूतिसम्भारं सर्वोपकरणैर्युतम् ॥
कृत्वा मठो[6]त्तमं विद्वान् देवीभक्तेषु विन्यसेत् ॥
जलवह्नि-तिवामश्वदानं कन्यादि तर्पणम् ॥
यथा सम्पद्यते शक्र तथा कार्यं सदादरात् ॥
मणिरत्नवितानं च घण्टाद्यं वादनानि च ॥
आयुधानि विचित्राणि देयानि विविधानि च ॥
कलशा हेमपात्राणि धूपमाल्यक्रिया वि[7]भोः ॥
दीपाः सर्वादरात्कार्या महाफलशुभावहाः ॥
एवं कृत्वा समाप्नोति वित्तशाठ्यविवर्जितः ॥
फलं यज्ञतपोदानतीर्थयात्रादिकं च यत् ॥
इह लोके महाकीर्तिः परत्र च पर[8] पदम् ॥
शाश्वतं चाऽव्ययं नित्यमगम्यं यत्सुरादिभिः ॥
तत्फलं लभते शक्र यत्र देवी[9]परा शिवा ॥

**ब्रह्मोवाच ॥**

भद्रा वृद्धिः शिवा शान्तिराग्नेयादि व्यवस्थिता ॥
[9]पूजितव्या प्रयत्नेन इहैवार्थे [10]फलप्रदा ॥

---

१ °येत् । महाविन्यासशोभाढ्या मण्डपे वामतोत्तरे ।
जगत्या तोमरोपेतां कुर्यादरनिवेशनम् ॥
सुमन्त्रविधिमाश्रित्य-क.
२ तद्दिशा-क. ३ ददाति मन्त्रवेत्तृणां मातृतं°-क. ४ °भाविनाम्-स. ५ °मूर्तिसंसारं क.
६ ° त्तरं-क. ७ °धौ-क. ८ परः शुभः-क. ९ प्रपूजिताः प्रयत्नेन-क. १० फलप्रदाः-स.

यं यं कामं चिन्तयित्वा पूजयन्ति मनीषिणः ॥

तं तं ददाति देवेन्द्र क्षेमाक्षेमफलं नृणाम् ॥

मन्त्रैर्विद्याविधानेन अस्त्रैः पाशुपतादिकैः ॥

क्षेमादिवर्णनिहितैः प्रत्येकं फलदाः क्रियाः ॥

रूपकैश्चानुभावादि प्रादुर्भा[१] वै....मादिकैः ॥

दानवान्तकरीं देवीं [२]बहुधा पूजयेच्छिवाम् ॥

मङ्गला शिवभेद[३]का महिषासुरघातिनी ॥

देवी चामुण्डरूपेण क्षेमाक्षेमफलप्रदा ॥

सौम्या शुभावहा दिव्या क्रियाभेदेन सिद्धिदा ॥

[४]असुरा जगता रौद्री समया गुहसम्भवा ॥

क्षेमप्रदा रूपवेशी महाविद्या तु पाव[५]र्की ॥

घोणा [६]रौद्री तथा पाशा श्रीघोणा [७]तु प्रकीर्तिता ॥

वि[८]द्या वाचकत्वेन रूपत्वेनाऽपराजिताः ॥

वारुणी दमनी ब्राह्मी गौरी प्रत्यङ्गिरा मता ॥

एतासां नवदा भिन्ना वामदक्षिणगारु[९]डाः ॥

[१०]कुलमानसभेषशवरादिषु सिद्धिदाः ॥

अभ्यर्थना महाभागा वैपरीत्ये भयावहा ॥

पूजिताः स्थापिताः शक्र न च राष्ट्रभयङ्कराः ॥

[११]कुलानि नैष्ठिकान्सिद्धा कुलसम्भववर्जिताः ।

क्षेमाद्या पूजनीयास्तु स्थापनीयाः कथञ्चन[१२] ॥

**ब्रह्मोवाच ॥**

श्रृणु शक्र प्रवक्ष्यामि चतुःषष्टि [१३]प्ररूपकम् ॥

---

१ °वैर्युगादिभिः—क. २ खङ्गस्थां पूज°—क. ३ °स्था—क. ४ अस्त्रराजकता रौद्री—क. ५ °का—क. ६ चैत्री तथा पद्मा—क. ७ परिकी°—क. ८ °द्यामोधारकत्वेन—क. ९ °डे—क. १० कुलमानभेदेन सवरादिषु सिद्धिदा—क. ११ °ननैष्ठिकैर्नु रौवक्तैः कुलसम्भवार्जितैः—क; कुलना नैष्ठिकम सिद्धान्नैः—स. १२ न—तथा—ब्रह्मोवाच—क. १३ °विरू—क.

महाभाग्यविशेषेण दानधर्मसमन्वितम् ॥

पूजयेद्विजयां देवीं शूल[1]पुस्ताक्षधारिणीम्[2] ॥

वरदोद्यतां सिंहस्थां सर्वसिद्धिप्र[3]दायकाम् ॥

मङ्गलां पूजयेद्देवीं सर्वसिद्धिप्रदायिकाम् ॥

सिंहपद्मासनां सौम्यां जटामुकुटधारिणीम् ॥

शूलाक्षसूत्रा वरदामभयं दक्षिणे करे ॥

[4]भद्रां तु पूजयेद्देवीं[5] भद्रासनसमवस्थिताम् ॥

नीलोत्पलकरां देवीं शूलाक्षसूत्रधारिणीम् ॥

[6]धृती तु पूजयेद्देवीं [ चण्डासन ] व्यवस्थिताम् ॥

पद्मदर्पणधारिणीं सर्वाभरणभूषिताम् ॥

शान्तिः शान्तिप्रदा कार्या पद्मा[7]सनव्यवस्थिता ॥

अक्षसूत्रधरा देवी वरदो[8]द्यतपाणिका ॥

शिवा वृषासना कार्या त्रिनेत्रा वरपाणिका ॥

डमरूरगधात्री च त्रिशूला निर्भयभद्रा ॥

जटामुकुटमर्द्धेन्दु वासुकीकृतकङ्कणम् ॥

पद्मा पद्मासनस्था तु प्रतिहारोपशोभिता ॥

तुष्टिं सम्पूजयेद्देवीं कलशोपरि संस्थिताम् ॥

पाशाङ्कुशकरां सौम्यां पद्मस्वस्तिकधारिणीम् ॥

उमा पद्मासना कार्या मृगसिंह[9]परिवृता ॥

योगपट्टोत्तरासङ्गा कमण्डलुकरा शुभा ॥

---

१ °पद्मासिधा°–क. २ °णीं । शूलाक्षसूत्र°–क. ३ °प्रदायिकाम्–स. ४ शुभ्रां तु–क. ५ °वीं भद्रासनसमन्विता–क. ६ धृति सम्पूजयेद्देवीं चण्डासनमवस्थिता–क; धृतिं तु–स. ७ °सनमवस्थितान्–क. ८ °ज्वलपाणिका दानोद्यतकरा देवीं–क. ९ °परीवृता–स.

वरदोद्यतशूलाक्षजयाद्यैः परिवारिताः ॥
अहमाला विराजन्ती पत्रकुण्डलधारिणी ॥
शिवार्चनरता देवी पुष्टिः कार्या यथा श्रुणु ॥
खड्गहस्ता महारूपा चर्ममुद्गरधारिणी ॥
अश्वरूपा सुरूपा च पुष्टिरेवंविधा भवेत् ॥
शिवा पद्मासना कार्या पद्मश्रीफलधारिणी ॥
गजैर्गृहीतकलशैः [1]स्नाप्यमाना सुशोभना ॥
ऋद्धिं पूजयते पद्मस्था वरदाऽभयपाणिकाम् ॥
दानोद्यतकरां देवीं व्या[2]हरन्ति शुभानि च ॥
वीणावादिनी पद्मस्था रतिः कार्या सुशोभना ॥
[3]दीप्तीः ख....समा कार्या कि....धारिणी ॥
सिंहासनस्थिता वाऽपि पद्महस्ता सुशोभना ॥
नीलोत्पलस्थिता कान्तिः कलशोत्पलधारिणी ॥
स्रग्मालाभूषिता देवी सर्वभरणचर्चिता ॥
पर्यङ्कोदरसंस्था तु पद्मा कार्या सुशोभना ॥
शङ्खपुस्तकधारी च स्रग्मालाभरणोज्ज्वला ॥
लक्ष्मीः पद्मस्थिता कार्या पद्मश्रीफलधारिणी ॥
ईश्वरी वृष[4]संस्था तु [5]जयमुकुटधारिणी ॥
चन्द्रार्द्धशेखरा देवी त्रिशूलोरग[6]धारिणी ॥
कपालसंस्था भवेद्वृद्धिर्बीजपूरकधारिणी ॥
योगपट्टोत्तरासङ्गा रत्नमालाधरा शुभा ॥

---

१ 'गजैर्गृहीतकलशैः स्ना' इतः परं "कर्तव्या लम्बकर्णसुशोभना। पद्माक्षसूत्रधारी च मध्यव्रतचरी शुभा" इत्येतत्पर्यन्त (७१) एकसप्तत्यङ्कितपत्रस्थो भागः सरस्वती भवनकोशे नास्ति ॥
२ °हरन्ती शुभानि च–ने. ३ दीप्तचण्डासना कार्या किरणोज्ज्वलधारिणी। स्रग्मालाभूषिता देवी–क.
४ °भस्था तु–क. ५ जटामुकुट°–क. ६ °भूषणा–क.

शाक्री गजासना कार्या वज्रहस्ता सुशोभना ॥
जयावती सिंहसंस्था शरशृङ्गधरी शुभा ।
हंसानना भवेद्ब्राह्मी मुञ्जमेखलभूषिता ॥
चतुर्वक्त्रा सुरूपाद्यदण्डकाष्ठकमण्डलुः ॥
अक्षसूत्रं च बिभ्राणा स्रुवहस्ताक्षधारिणी ॥
योगपट्टक[1]बद्धाङ्गी सवेदोद्गिरणानना ॥
जयन्ती कुण्डसंस्था तु कुन्तशूल[2]करा शुभा ॥
खड्गखेटकरा कार्या वरदाऽभयपाणिका ॥
अपराजिता तु कर्तव्या सिंहा[3]रूढा महाबला ॥
पिनाकशार्ङ्गहस्ता तु [4]खड्गखेटकधारिणी ॥
त्रिनेत्रा सुजटाजूटा वासुकिकृतभूषणा ॥
पाशाङ्कुशधरादेवी अजिता मकरासना ॥
रथस्था मानसी कार्या घण्टामुद्गरधारिणी ॥
वज्राङ्कुशधरा देवी सर्वाभरण[5]भूषिता ॥
फलनीलोत्पलकरा [6]उत्सङ्गे बालकान्विता ॥
माया पाशाङ्कुशा कार्या माया चामरधारिणी ॥
शूकरस्था महामाया मोहयन्ती चराचरम् ॥
मोहिनी मृगमारूढा ध्वजशूलाक्षधारिणी ॥
वेणुहस्ता सुरापात्रा हारकेयूरभू[7]षिता ॥
लालसा गजसंस्था तु [8]वरदर्पणधारिणी ॥

---

१ °खट्वाङ्गी–क. २ °धरा–क. ३ °रूप महा°–क. ४ शूलखड्गाक्ष–धा°–क.
५ °भूषिता । श्वेतपङ्कजसंस्था तु दण्डाक्षतधारिणी ।
दितिर्दण्डकरा कार्या सर्वाभरणभूषिता ॥
फलनीलोप्तलाकारा–क.
६ प्रशरोमनिकान्विता–क. ७ °णणा–क. ८ वरदाभयपाणका–क.

नावा शकटमारूढा विमला हर्षवर्चसा ॥
अक्षसूत्र[1]धारी च कमण्डलुकरा शुभा ॥
गौरी पद्मासनस्था तु वरदाऽभयपाणिका ॥
अक्षसूत्रकरा देवी कमण्डलुकरा शुभा ॥
हिरण्यसिंहमासीना वरदाऽभयपाणिका ॥
कौशिकी कौशिकारूढा त्रिशूलमुण्डधारिणी ॥
कपालकर्तिका हस्ता घोररूपा महाबला ॥
[2]....घनस्थानकर्तव्या सर्वाभरणभूषिता ॥
वीणावादनशीला च [3]वीज्यमाना सुशोभना ॥
[4]दुर्गादिगाजमत्तारी पृष्ठगा त्रिपुरसुन्दरी ॥
पिनाकशार्ङ्गचर्मासि धारिणी महिषा[5]सना ॥
[6]तच्छीर्षस्थ महिषैः सुभटैः परिवारिता ॥
[7]रत्नखड्गत्रेण नैत्रैश्च तर्जिता—महाबलैः ॥
वेष्टिता नागपाशेन केचिद्भिन्ना गतासवः ॥
[8]देवी शूलगता कार्या सर्वे ते सम्मुखाननाः ॥
पादपद्मासने चैवमकं सिंहनिवेशितम् ॥
एवं विधेन रूपेण दुर्गा कार्या न चान्यथा ॥
[9]पद्मोपरि समासीना क्रिया कार्या सुशोभना ॥
पुष्पमाला विराजन्ती प्रभामण्डलभूषिता ॥
श्रुतमेखलधारी च सर्वमी[10]ह समन्विता ॥
व्रतस्थारुन्धती कार्या पुष्पोदक[11]करा शुभा ॥

---

१ °करा देवी–क. २ मतिर्मनस्था कर्तव्या–क. ३ नृत्यमाना सुशोभना–क. ४ दुर्गादिभुजमतीरि–क. ५ °पहा–क. ६ तच्छीर्षोत्य महाकायैः तद्भटैः परिवारिताः–क. ७ रक्तभ्रूरक्तनेत्रा च तर्जिता नन्महाबलैः–क. ८ देव्यः–क. ९ पद्मोपरि–क. १० °शोभास°–क. ११ °करी शुभा–ने.

पट्टे तु पूजयेद्देवीं घण्टाहस्तां त्रिशूलिनीम् ॥
वर्णा सुरूपा कर्तव्या लम्बकर्णा सुशोभना ॥
[1]कपालिनी सदा कार्या कपालशूलधारिणी ॥
रुद्ररूपा तथा रौद्री [2]वृषसंस्था सुशोभना ॥
जटामुकुटसार्द्धेन्दु वासुकीकृत[3]कङ्कणा ॥
[4]रथस्थां पूजयेत्कालीं कपालशूलधारिणीम् ॥
[5]मायूरी शिखि संस्था तु पाशशक्तिधरा शुभा ॥
त्रिने[6]त्रा वारक्ते कर्त्तव्या सर्वाभरणभूषिता ॥
[7]चन्द्रासना समारूढा पद्मस्वस्तिकधारिणी[8] ॥
सुरूपां पूजयेद्देवीं [9]शूलपट्टिशधारिणीम् ॥
जटोरगशिरश्चन्द्रभूषितां शिवरूपिणीम् ॥
विपुला शक्र(!)नाशार्थं वज्रचक्रधनुर्धरा ॥
अश्वारूढा सदा पूज्या सर्वाभरण[10]भूषिता ॥
अम्बिकां शूलसूत्राक्षधारिणीं पूजये[11]त्सदा ॥
पद्मासनस्थां देवेन्द्र चर्चिकां साम्प्रतं श्रुणु ॥
प्रेतारूढां महादेवीं नानाभरणभूषिताम् ॥
ऊर्ध्वकेशीं करालां तु मुण्ड[12]कर्तिकधारिणीम् ॥
सुरपूजिता तु कर्तव्या गजारूढा महाबला ॥
[13]अक्षाङ्कुशधरा देवी तथा वैवस्वतीं श्रुणु ॥

---

१ पद्माक्षसूत्रधात्री च मध्यव्रतचरी शुभा । कपालिनी सदा–स; पद्माक्षसूत्रधारी च महाव्रतचरी शुभा । कपालिनी सदा कार्या–क. २ जपसंस्था–क. ३ °भूषणा–क. ४ रथसस्था पूजयेद्देवीं शूलकपाल धारिणीं–क. ५ मायूरी शिखि–ने; स. ६ °त्रा शत्क कर्तव्या–क; त्रिनेत्रे त्वारक्ते कर्तव्या–स. ७ दण्डासन समारूढां–क; चन्द्रासनसमा°–ने. ८ °णीं–क.
९ हारकेयूरभूषितां । शूलखड्गधरां देवीं दग्धरूपां नराशनां ।
त्रिनेत्रां पूजयेद्देवीं शूलपट्टिशधारिणीं–क.
१० °भूषणा–क. ११ °तथा–क. १२ °कण्डक°–क. १३ वज्राङ्कुश°–क.

कपालदण्डहस्ता तु [1]सूकरस्था यमासना ॥
कौमारी पूज्यते शक्रमयूरासनशक्तिभृत् ॥
[2]त्रिदण्डी बालरूपा च रक्तमाल्या [3]सकुक्कुटा ॥
माहेश्वरी वृषारूढा त्रिनेत्रा शूलधारिणी ॥
वीणावादनशीला च हारकेयूरभूषिता ॥
शङ्खचक्रधरा पूज्या वैष्णवी गरुडासना ॥
वनमालाधरां देवीं महालक्ष्मीं तथा शृणु ॥
गन्धारा शिवशूला च नृत्यमाना कपालिनी ॥
सौम्यानना सुसम्पूर्णा त्रिनेत्रा मुण्डभूषिता ॥
तस्यास्तु सुखगा कार्या कार्तिका [4]व्रतसंस्थिता ॥
वामदक्षिणकौ कार्यौ शूलोत्पलकरौ नरौ ॥
सिंहपद्मासना देवी वृषप्रेतासना तथा ॥
कौशिकी हंसयानेन कपालशूलधारिणी ॥
शिवदूती प्रकर्तव्या यौवनाऽऽभरणोज्ज्वला ॥
[5]शिव वक्त्राङ्कुशधरा निर्मांसा कोटरेक्षणा ॥
[6]प्रवालसदृशौ चौष्ठौ विकासा नायकबन्धना ॥
मुद्रालङ्कृतकर्णा च वामोरु करसंस्थिता ॥
पीठसंस्थेन [7]यानेन तथा च विकृतानना ॥
चामुण्डा पूज्यते देवी ऊर्ध्वकेशी [8]भयानना ॥
प्रेतासनस्था निर्मांसा [9]क्षामा खट्वाङ्गधारिणी ॥
कपालशूलहस्ता च [10]कर्तिकाभरणोज्वला ॥

---

१ सूकरास्या यमासना–स. २ त्रिदण्डा–स. ३ सकुङ्कुमा–स. ४ प्रेत°–क.
५ शिवाभ्रक्षाङ्कुशधरी–क. ६ अचिरेण तथैवोष्ठो विकेशा नागबन्धना–क. ७ याम्येन–क.
८ भयङ्करा–क. ९ क्षमालाखटवाङ्ग–क. १० कर्णिका°–क.

[1]शिवा वज्राङ्कुशमुद्रां वस्त्रे च लम्बोदर संस्थिता ॥
गजचर्माम्बरा रौद्रा नानाभरणभूषिता ॥
[2]चतुःषष्टेस्तु देवीनां रूपकं कथितं तव ॥
साम्प्रतं च सुराध्यक्ष महाभाग्यं वदाम्यहम् ॥

## इति चतुःषष्टिदेवीरूपकम् ॥

---

## चतुःषष्टिदेवीस्थापनपूजनम् ॥

**ब्रह्मोवाच ॥**

यथा शिवस्य [3]चैवाऽन्यो विद्यते शक्रपूजने ॥
तथा चान्यं न पश्यामि चतुः[4]षष्टेस्तु पूजनात् ॥
सुवर्णभूमिदानस्य गोदानस्य च यत्फलम् ॥
[5]तदाधिकं चतुःषष्टि[6].............स्मृतेरिह ॥
अश्वमेधसहस्रेण वाजपेयशतेन च ॥
यत्फलं लभते कर्ता फलं त[7]त्स्थापनेऽधिकम् ॥
गङ्गास्नानसहस्रेण सर्वतीर्थप्लवेन च ॥
यत्फलं लभते कर्ता धारणात्तत्फलं लभेत् ॥
तस्मात्किं बहुना शक्र भाषितेन पुनः पुनः ॥
यदीच्छे[8]द्विमलान्भोगा[9]न्नार्थं च विपुलं यदि ॥
[10]चतुःषष्टेस्तु कर्तव्या स्थापना सुरपूजित ॥
प्रासादे मण्डपे गेहे चित्रे वस्त्रे च लेखिता ॥

---

१ मुद्रा वज्रे रत्नचोष्ठे संस्थिता वामकाङ्गुलिः । गजचर्मा'–क. २ चतुः काष्ठा तु देवीनां रूपं कथितं तव–क. ३ नैवान्ते–क. ४ °षष्ठयस्तु–क. ५ फलं तदाधिकं शक्र चतुषष्टिस्मृताविह–क.; तदधिकम्–स. ६ Hiatus in उ and स. ७ स्थापितोऽधिकम्–क. ८ °द्विपुलान्–क. ९ राज्यं च–क. १० देवीनां तु चतुष्षष्टिः स्थापिता सुरपूजित–क.

चतुःषष्टिर्महाभाग पूजिता राज्यदा मता ॥
सौवर्णीं राजतीं ताम्रीं रत्नजां शैलकाष्टजाम् ॥
चतुःषष्टिं प्रतिष्ठाप्य सम्प्राप्तं जन्मनः फलम् ॥
चतुःषष्टिं प्रतिष्ठाप्य द्वात्रिंशत्षोडशाऽ[1]थवा ॥
वसुसङ्ख्यम[2]थापीह सर्वं[3] तरति दुष्कृतम् ॥
सर्वग्रहभवां पीडां[4] कर्मजां[5] दोषजा[6]मपि ॥
[7]भवे कृत्वा न सन्देह एकान्ते स्थापयेद्यदि ॥
महालक्ष्मीं सुराध्यक्ष सर्वापत्सु निबर्हिणीम् ॥
यथा शिवे पराशक्तिश्चतुःषष्टौ [8]तु तादृशी[9] ॥
आचार्यं च विशेषेण भक्तिः कार्या सुरोत्तम ॥
सङ्क्रान्तौ ग्रहणे चैव व्यतीपाते दिनक्षये ॥
[10]कृष्णाष्टम्यां नवम्यां च चतुर्दश्यां तथैव च ॥
अमावास्यां विशेषेण पूजा कार्या सुरोत्तम ॥
चतुःषष्ट्यां[11] तु विज्ञाते [12]तन्त्राष्टकस्य पारगे ॥
देव्यावतारकुशले[13] दानं देयं सुखार्थिभिः ॥
चतुर्वेद[14]सहस्रेण कृतेन यत्फलं लभेत् ॥
[15]तत्फलं चाधिकं लभ्यं तस्या कृत्वा प्रतिश्रयम् ॥
वाजपेयसहस्रेण सम्यगिष्टेन यत्फलम् ॥
[16]अश्वमेधमवाप्नोति चतुःषष्टौ तदेव च ॥

---

१ तथा–क. २ °थापीन्द्र–क. ३ °वा–क. ४ °डा–क. ५ °जा–क. ६ यदि–क. ७ भवेत्तान् नास्तिसन्देह प्रकाशापयते यदि–क. ८ च–क. ९ °शी। आचार्ये तु विशेषेण शक्तिः कार्या सुरोत्तम। संक्रान्तौ–क; ने. १० षष्ठ्यम्यै नवम्यां च–क. ११ °ष्टया तु वि°–क. १२ तद्राष्ट्रगं°–क. १३ °लो–क. १४ सहस्रं धारिण भोजनेन फलं च यत्–क. १५ तत्फलं याममात्रस्य चतुःषष्ट्यां तु वेदके–क. १६ अश्वदानादवाप्नोति चतुःषष्टौ तु वेदके–क.

ग्रहणे चन्द्रसूर्याभ्यां कुरुक्षेत्रे च यत्फलम् ॥
भूमिदानादवाप्नोति [1]यत्फलं [illegible]धिकम् ॥
कलौ युगे महाघोरे धर्मे च तमसावृते ॥
चतुःषष्टौ तु कर्तव्या पूजा वाक्काय[2]कर्मणा ॥

**तथा ॥**

नरेन्द्रेण विशेषेण चतुःषष्ठिप्रतिष्ठिता ॥
कर्तव्या राज्यकामेन सम्यक्ते कथितं मया ॥
स्थापनं च प्रवक्ष्यामि सर्वकामप्रदायकम् ॥
सर्वकालं प्रकर्तव्यं कृष्णपक्षे विशेषतः ॥
पूजा च महती कार्या स्यान्महाफलकाङ्क्षिभिः ॥
मणिहेमविशेषाढ्यैर्वस्त्रैः कौठफलोद्भवैः ॥
[3]विविधैः सितरक्तैश्च [4]पीतकृष्णैः क्रमात्तथा ॥
गन्धैः सकर्पूरमद रत्नैः पुष्पैः शुभैः फलैः ॥
कल्याणादि महाधूपैर्दीपैश्चन्द्रोदयादिभिः ॥
हेमपात्रस्थिता कार्या [5]कर्पासा अर्थसिद्धये ॥
बलिगन्धैश्चरासिद्धिः पातपात्रैः सुरोत्तम ॥
कर्तव्यः सर्वविद्यानां देवी संस्थापने विधिः ॥
ध्वजारोहे विशेषेण विधिः कार्यः फलार्थिभिः ॥

---

१ तत्फलं पाणिनेधिकम्—क. २ °कर्मणा। तथा। नरेन्द्रेण—ने. ३ विचित्रैः—क.
४ नील कृ°—क. ५ क्रिया सर्वार्थसिद्धये—क.

## अथ ध्वजारोहणविधिः ॥ १५ ॥

**तत्र देवीपुराणे ॥**

ध्वजदण्डः शुभः कार्य आयामपरिणाहतः ॥
[1]दण्ड—ध्वजः कार्यो भूमे[2]रूर्ध्वा च लम्बितः ॥
हेमकिङ्किणिशोभाढ्यो लाञ्छितो वाहनादिभिः ॥
प्रतिष्ठाविधिमाश्रित्य होमदानं च कारयेत् ॥
देवीसम्पूजनं कार्यं मन्त्रविद्याविशारदैः ॥
चतुःषष्टौ तु विद्यानामुद्धारं यस्तु विन्दति ॥
स गुरुः स्थाप[3]कश्रेष्ठो विद्येशपददायकः[4] ॥
पदमालादिकैर्मन्त्रैः सर्वं कार्यं यथाविधि ॥
देवीनां [5]हवनं पूजा नाऽन्यैः कार्यं कदाचन ॥
विफलं तद्भवेच्छक्र कर्तृराष्ट्रभयावहम् ॥
तस्मात्सुविधिमाश्रित्य निवेशे ध्वजरोहणम् ॥
कृतं सफलतां याति कर्तृराष्ट्रभयादिषु ॥
[6]रक्षार्थं तु भवेदेको द्वितीयो ध्वजरोहणे[7] ॥
धर्मध्वजस्तृतीयस्तु चतुर्थः कामिको ध्वजः ॥
यात्रायां पञ्चमः ख्यातो बहुधा परिकीर्तितः ॥
[8]अन्ये च बहवो भेदा एते यान्ति निवेशने ॥

[9]**तथा ॥**

देव्यो [10]कः कलशं सिंहं ध्वजाङ्कं दापयेच्छुभम् ॥

---

१ अण्डजस्तु ध्वजः कार्यो–क; hiatus in ड and स. २ °रधौव लंबितः–क; स. ३ °कः पूर्वे–क. ४ °काः–क. ५ हरणं–क. ६ तथा, राज्यानुभवेदेको–क. ७ °णः–क. ८ अनेन बहवो भेदाः पताकाया निबोधने–क. ९ तथा, नास्ति–क. १० वः कारणं सिंहं ध्वजगं सर्वकल्पनीयं पुराकृतं–क.

[1]प्रतिष्ठा द्विगुणं सर्वं कल्पनीयं पुरा कृतम् ॥
यस्मात्फलं तु निष्पत्तौ जायते विधिपूर्वकम् ॥
तस्माद्ध्वजे शिलारोहे महादानं प्रदापयेत् ॥
[2]सङ्कीर्णे तु प्रतिनादे रक्षार्थं स्थापयेद्ध्वजम् ॥
[3]स्वलिङ्गकलशे वाऽथ विभग्ने भयदा खगाः ॥
कपोताः कौशिकास्तत्र महाभयकरा नृणाम् ॥
[4]मदवृष्टिदा वत्स ततः——कर्तव्यो जयनोरिह ॥
रक्षाचिह्नं तदा................................ ॥
[5]स्ववाहनां–कं कृत्वा पर्वादिषु निवेशयेत् ॥
क्षेमारोग्यकरं [6]वत्स नृपे राष्ट्रभयं [7]समेत् ॥
सुभिक्षं क्षेममारोग्यं [8]नृपस्य च जनस्य [9]च ॥
वाहनाङ्कध्वजो देयो विचित्रः किङ्किणीयुतः ॥
दर्पणं चामरं घण्टां छत्रं दद्यात्तदूर्ध्वगम् ॥
अस्त्राभिमन्त्रितो देयो ध्वजो दण्डान्मही[10]मतः ॥
[11]गन्धैः फलादिरत्नैश्च कलशान्स्थापयेत्पुरा ॥
ततो ध्वजः प्रदातव्यो ध्यात्वा[12]कालं शिवाविधिम् ॥
शिवेऽप्येवं ध्वजो देयो विष्णौ विष्णुपदं न्यसेत् ॥
चित्रादिरक्षकान् कृत्वा वासुदेवं सपञ्चकम् ॥

---

१ तथा ॥ देव्योकः कलशं सिंहं ध्वजाङ्कं दापयेच्छुभम् । प्रतिष्ठाद्विगुणं–ने. २ संकीर्णे प्रतिमा देवरक्षार्थं दापयेध्वजं–क; संकीर्णं तु प्रतिमादे°–स. ३ खलिंगे

४ मकराः षष्टिकारसे स्वरस्सिद्धे सध्वजः ।
कर्तव्यो यजमानोप रक्षतिं गतदा शुभम् ॥ for the two lines.
मद...वृष्टिदा वत्स..तः सि..कर्तव्यो यजनो हि रक्षा चिह्नं तदा... ।–स.

५ सुवाहनां कृतं कृत्वा पर्वतादौ निवेशयेत्–क. ६ शक्र–क; ने; स. ७ गमेत्–क; रामेत्–ने; स. ८ राष्ट्रस्य च नृपस्य च–क. ९ च । छत्रं दद्यात्तदूर्ध्वगं अस्त्रीभिमंत्रि...वाहनाङ्क–ने. १० °न्महीं गतः–क. ११ ध्वजैः–क. १२ °त्वा कालं शिवाविधि–क.

ध्वजं खड्गाङ्कितं दद्याद्विष्णुलोकफलप्रदम् ॥
चक्रं चाऽनेन विधिना, रोपणीयं शुभावहम् ॥
इहायुः पुत्रधनदं देहान्ते भवनं स्वकम् ॥
पञ्चरङ्गं ध्वजं पुष्पं यो दद्यात्परमेश्वरि[1] ॥
[2]रङ्गतन्तुसमं कालं देवलोके भवेत्सुखी ॥

तथा

आनन्दनृपलोकानां कृत्वा पूजां महाफलाम् ॥
न ध्वजः प्रदातव्यो जयार्थं सुखसिद्धिदः ॥
रे[3]खादिदण्डकः कार्यो यात्राकाले [4]स्वदिङ्मुखः ॥
महादेवीगणं तत्र गृहाष्टकसमन्वितम् ॥
कृत्वा तु लभते वत्स कामकं द्विजसत्तमः ॥
गोभूहिरण्यम[5]श्वैकं देयं दानं सुखार्थिभिः ॥
प्रतिष्ठगर्त[6]सा....ध्वजान्ता[7] सर्वकामदा[8] ॥
[9]ध्वजाः कार्यास्तु सर्वेऽपि, न्यूनमन्यकृतं पुनः ॥

तथा

[10]शक्र उवाच ॥

देव्या ध्वज[11]प्रमाणं च दण्डस्य विधिलाञ्छनम् ॥
दीयते [12]च यथा तात तथा सर्वं ब्रवीहि नः ॥

ईश्वर उवाच ॥

अण्डजो मण्डजश्चापि ध्वजः केशविवर्जितः ॥

---

१ °रे–क; स. २ वंगं तत्र समं–क; रं त गतं तु समं–ने. ३ रेखादि दण्डिकः–स.
४ सुदि°–क. ५ °मश्वै तं देयदान ध्वजादिभिः–क. ६ °पूरादि–क; प्रतिष्ठा गर्तसा–स.
७ °ताः–क. ८ °दाः–क. ९ ध्वजे–क. १० शुक्र–क. ११ °पुमांसश्च कुर्याद्विविधलांछनं–क.
१२ तु–क.

[1]नवः समश्च श्लक्ष्णश्च प्रासाददण्डमर्चितम् ॥
[2]समं सूक्ष्मभृतं शुभ्रं शैलं वा धातुजं तथा ॥
[3]तस्मिन्पट्टे लिखेत्सिंहं सर्वलक्षणलक्षितम् ॥
सचन्द्रया रोचनया लेखन्या दूर्वया लिखेत् ॥
प्रासादाद्दोलमानं क्षितिविस्तारतः करम् ॥
ध्वजपट्टे तु कर्तव्या दश या दिक्षु देवताः ॥
सर्ववाहनसंस्थाभ्यां [4]लक्षिताः सहजेन च ॥
किङ्किणी चामरोपेता घण्टादर्पणशोभिताः ॥
[5]हुतं होमो महाप्राज्ञः सहकारदलान्वितम् ॥
महामङ्गलशब्देन देव्याः कुर्यात्प्रपूजनम् ॥
सुगन्धिपुष्पनैवेद्यैर्यथा विभवविस्तरम् ॥
कन्यकाः ब्राह्मणाः भोज्याः शर्करादधिपायसैः ॥
भूतानां तु बलिं दत्त्वा तथा [6]तमुपरोहयेत् ॥
सर्वं[7] काममवाप्नोति विद्याधरपतिर्भवेत् ॥
मोदते [8]विविधैर्भोगैः सर्वविद्यार्थपारगैः ॥
अथवा हैमं रौप्यं वा वार्क्षं पार्थिवशैलजम् ॥
कारयेन्मृगराजं तु महाकरि[9]मदापहम् ॥
[10]महागजनखोत्खातमुक्ताफलकदम्बकम् ॥
एवंविधं नरः कृत्वा नवम्यां पूजयेच्छिवाम् ॥
सोपवासः शुचिर्दक्षः सर्वसङ्गविवर्जितः ॥
कन्यकाः पूजयित्वा तु [11]विप्रान्वेदविदस्तथा ॥

---

१ नवश्च समश्च प्रमोदे भूयाद्दशमष्टितम्—क. २ समं सूक्ष्ममृजं शुभ्रं—ख. ३ तस्मिन् पटे लिखेत्—ख ४ संस्थिताः—क. ५ कृतं—क. ६ प्रियतरो भवेत्—क. ७ °र्वान् कामानवा°—क. ८ विभवैर्भोगैः—क; विविधैर्भोगैः सर्वविद्यार्थपारगः—ख. ९ °मखापहम्—क. १० महामखलद्योखात् मुक्ताफल°—क. ११ देवान् सर्वान् विप्रांस्तथा—क.

देवीभक्ताः सदाचारास्त्रिकालं हवने रताः ॥
ते यथाशक्तितस्तोष्या ध्वजारोहणकर्मणि ॥
कन्या देवी स्वयं प्रोक्ता कन्यारूपा त्रिशूलिनी ॥
यावत्साऽक्षतयोनिः स्यात्तावद्देवी सुरारिहन् ॥
द्विजो ब्रह्मा शिवो विष्णुः स्वकीयव्रतपालकाः ॥
पूजितैस्तैः [1]सदैवात्र सर्वदेवास्तु पूजिताः ॥
दीनान्धकृपणादीनामन्नं देयं स्वशक्तितः ॥
यथा सर्वगतां देवीं [2]तदुद्दिश्याक्षयं भवेत्[3] ॥
नानाभक्षाक्षत[4]दधिदूर्वा उत्कारिकान्वितम् ॥
बलिं तु सर्वभूतेभ्यो दत्त्वा दिक्षु निवेदयेत् ॥
वज्रघोणं तथा जप्त्वा [5]अष्टविंशाक्षराऽपि वा ॥
सिंहस्तंभे[6] समारोप्य सर्वमङ्गलसंयुतम् ॥
वेदध्वनिमहामन्त्रकालिका चर्चिकापदम् ॥
यस्य सिंहप[7]रध्याने देयं पूर्वोपकल्पितम् ॥
[8]एवं संवस्त्रसंवीतं सर्वाभरणभूषितम् ॥
देव्या महाध्वजं न्यस्य शेषाणामनुविन्यसेत् ॥
ब्रह्मविष्ण्विन्द्ररुद्राणां सोमसूर्यदिवौकसाम् ॥
ध्वजदानं महादानं सर्वदानोत्तमोत्तमम् ॥
यावन्न दीयते शक्र ध्वजः प्रासादमूर्धनि ॥
तावन्न भवति श्रेयः प्रासादे यदवाप्यते ॥
ध्वजशून्येषु भूतानि नागगन्धर्वराक्षसाः ॥

---

१ सदाशक्र=क. २ तामुद्दिश्य क्षयं नानाभक्षाक्षतविधं—क. ३ नानाभक्षाक्षतदधि—ने; स. ४ °विधं—क; °दधिदूर्वा, उत्करिका°—स. ५ °च वा°—क; अष्टत्रिंशाक्षरापि वा—स. ६° भं—ने. ७ °परं ध्यायेत् एकं पूर्वप्रक°—क ८ एवं पूर्वं ससंवीतं—क; एवं तं वस्त्र°—ने; स.

विद्रवन्ति महात्मानो नानाबाधाः प्रकुर्वते ॥
तस्माद्देवगृहद्वारे पुरपर्वतपत्तने ॥
[1]उच्छ्रितां शान्तिकर्माय ध्वजाः शुक्रसमाहिताः ॥
न हि चाऽन्यध्वजादानादुत्तमं दृश्यते क्वचित् ॥
दानमिष्टं च पूर्तं च देव्यां[2] दीपस्तथैव च ॥
अनेन विधिना यस्तु ध्वजं शक्र निवेशयेत् ॥
सर्वान् कामानवाप्नोति स नरः शिवतां व्रजेत् ॥
तस्य दर्शनसंलापादपि पापरता नराः ॥
विमुक्ताः सर्वपापेभ्यो दिवं यान्ति न संशयः ॥
राजा चाऽनेन विधिना देवी[3]लान्छनलाञ्छितः ॥
शङ्खचक्रवृषताक्ष्यर्हंसबर्हिणवारणैः ॥
सादरो भक्तिमास्थाय ध्वजयष्टिं समुच्छ्रयेत् ॥
न तस्य संगरे शक्र व्याधयो न च वैरिणः ॥
न च शस्त्रकृता पीडा भवेद्ध्वजसमुच्छ्रयात् ॥

[4]तथा

आसील्लुब्धो निराचारः कैवर्तो मत्स्यघातकः ॥
नेपाले पत्तने शुक्र प्रययौ मत्स्यबन्धने ॥
स च विन्ध्याटवीमध्ये देवीगेहमपश्यत ॥
तस्य जालं प्रभूतेन शीर्णं कालेन भार्ग[5]वः ॥
देव्या गृहाग्रतो [6]वृक्षे तस्मिंस्तत्समलम्बयत् ॥
ततो गृहं स्वकं वत्स पुनस्तत्रैव कालतः ॥

---

१ उच्छृताः सात्विकामाय ध्वजाः—क; उच्छ्रिता शान्तिकामाय—ने; स. २ देया? ३ °वांछल-वांछनं—क; °लाञ्छनं—ने. ४ तथा, नास्ति—क. ५ °व—ने. ६ वृक्षस्तस्मि...त्समतलंबयत्—ने.

आगत्य कर्पटखण्डं[1] ॥
[2]दत्त्वागतः पुनः काला[3]न्मृतो भूत्खगाधिपः ॥
विद्याधरपतिश्चित्रः सर्वविद्यार्थपारगः ॥
तथा [4]स्वभवने देव्याः [5]पूर्वभक्तिसमन्वितः ॥
ददौ ध्वजान्सदा शुभ्रान् किङ्किणीरवकान्वितान् ॥
तेनाऽसौ कर्मणा पूर्वस्मरणाद्भृगुसत्तम ॥
कर्मयोगं समास्थाय [6]खगराजस्त्वसावभूत् ॥
अनिवारितशक्तिश्च सर्वविद्याधरेश्वरः ॥

**[7]तत्र भविष्यपुराणे—**

**[8]नारद उवाच ॥**

हन्त ते कथयिष्यामि ध्वजारोपणमुत्तमम् ॥
यदुक्तं ब्रह्मणा [9]पुण्यं त्रिदशाधिपतेः पुरा ॥
पुरा देवासुरे युद्धे [10]योध्दुं देवैर्जयेप्सुभिः ॥
कृतान्युपरि चिह्नानि वाहनानि ध्वजानि तु ॥
लक्ष्मचिह्नध्वजं केतुरिति पर्यायनामभिः ॥
कीर्तितः स च तस्येह प्रमाणं [11]गदतः शृणु ॥
ध्वजो वंशस्य कर्तव्यो[12] विशुद्धो ऋजुरव्रणः ॥
प्रासा[13]दायामतुल्यस्तु ध्वजवंशः प्रमाणतः ॥
देवागारस्य [14]या प्रोक्ता मञ्जरी कलशादयः ॥

---

१ °डं सहमानो मूर्ध्वमूर्ध्वैः—क. २ गत्वागतः—क. ३ °मृतस्सोभूद्धनाधिपः—क.; मृतस्सोभूत् खगाधिपः—ने; स. ४ स°—ने; स. ५ भक्तिश्रद्धासमन्वितः—क. ६ खगराजस्त्वसावभूत्—स. ७ तत्र नास्ति—क. ८ I, 138, अध्यायारम्भः—पृ. १२२ ९ पूर्वमृषभाधिपतेपुरः—मु. भ. पु. १३८.१ १० यानि for योध्दुं—मु. भ. पु. १३८.२ ११ गजतुः—इति उदयपुर पुस्तके १२ °स्त्वविद्धश्चऋजुरव्रणः—मु. भ. पु. १३८.४ १३ °दस्य सतुल्यस्तु—क; प्रासादव्याससतुल्यस्तु—इति मु. भ. पु. १३८.४ १४ ये—मु. भ. पु. १३८.५

अथ वा तत्प्रमाण[1]स्तु ध्वजदण्डः [2]प्रकीर्तितः ॥
अन्तर्गृहस्य [3]या देवी सूत्रतः परिकल्पिता ॥
तस्य व्यासो भवेद्वंशः प्रासादस्य यदूत्तम ॥
अथवा मूल [4]सूत्रेण [5]व्यासस्तस्य गृहस्य च ॥
[6]प्रासाद [7]व्यास इत्युक्त इह वै स न संशयः ॥
[8]केतुदण्डो भवेद्वंशो न भिन्नो नाऽनृजुस्तथा ॥
[9]धनुर्ध्वजो युगं चैव नाविका पुरुषस्तथा ॥
चतुर्हस्ता भवन्त्येते प्रशस्ताः कृष्णनन्दन ॥
अष्टहस्तप्रमाणस्तु विंशार्द्धस्य प्रमाणतः ॥
सामान्यो ध्वजदण्डस्तु सर्वसाधारणो मतः ॥
[10]उत्तमस्तु ध्वजो दण्डः स्मृतो हस्तास्तु षोडश ॥
विंशद्धस्तात्परं दण्डं [11]शक्र[12]केतोर्न कारयेत् ॥
युग्महस्तस्तु कर्तव्यो ध्वजदण्डो मनीषिभिः ॥
चतुरङ्गुलविस्तीर्णः [13]सुव्रतो [ द्व्यंगुलोपरि ] ॥
नातिसूक्ष्मो न च स्थूलः न कार्यो नतपर्व च ॥
समपर्वस्तु कर्तव्यः सुदृढः श्लक्ष्ण एव हि ॥
[14]वक्रः पुत्रविनाशाय सव्रणोऽर्थविनाशकः ॥
रोगदोऽयुग्महस्तस्तु [15]भिन्ने दुःखमनन्तकम् ॥

---

१ °णं तु-क. २ प्रकल्पितः-क. ३ या वेदी-मु. भ. पु. १३८.६ ४ °मन्त्रेण यो-न्यासो तद्गृहस्य च-क. ५ यो व्यासोऽन्तर्गृहस्यतु-मु. भ. पु. १३८.७ ६ प्रासादव्यास इति स प्रोक्तश्चेह न संशयः-मु. भ. पु. १३८.७ ७ °न्यासतः प्रोक्त इहलोके न संशयः-क. ध्वजयोग्यो भवेद्वंशो न जीर्णो न मृदुस्तथा-क; केतुदण्डो भवेद्वंसो-स; केतुर्भवेद्वरो वंशो न निम्नो न ऋजुस्तथा-मु. भ. पु. १३८.८ ८ पत्रं ध्वजो युगं चैव नलिका-मु. भ. पु. १३८.८ ९ नायिका पुरुषस्तथा-स. १० दण्डाणिध्वजो यस्तु-मु. भ. पु. १३८.१० ११ न कार्यस्सर्वथा रवेः-मु. भ. पु. १३८.११ १२ °केतुर्नकार-क. १३ सच्छक्तो नपर्ववान् समपर्व-क; सद्वृत्तो°-स; सुवृत्तो व्यंगुलोपरि-मु. भ. पु; १३८.१२ १४ चक्रः-ने. १५ भिन्नो-क; मु. भ. पु. १३८.१४

करोति हानिं धर्मस्य हीनो [1]वास्तुप्रमाणतः ॥
[2]वैषम्य समपर्वा वै दद्याच्छत्रुमथोन्नतः ॥
जयो जयन्तो [3]जैत्रेश्च शत्रुहन्ता जयावहः ॥
नन्दोपनन्दनश्चैव इन्द्रोपेन्द्रस्तथैव च ॥
दशैते कीर्तिता [4]भेदा ध्वजस्यानन्दसम्मिताः ॥
द्विहस्तस्तु जयो दण्डो जयन्तो द्विगुणो मतः ॥
[5]द्वादशार्द्धस्तदा जैत्रः शत्रुहन्ता[6]ष्ट एव च ॥
जयावहस्तु विंशार्द्धो नन्द आदित्यसम्मितः ॥
चतुर्दशोपनन्दस्तु इन्द्रः षोडश उच्यते ॥
उपेन्द्रोऽ[7]ष्टादश प्रोक्तो [8]आनन्दो विंशतिःस्मृतः ॥
[9]भिन्नो वै चक्रसन्धिश्च न कार्यो दण्ड एव हि ॥
[10]मूल[11]सूत्रेण कर्तव्यो व्यासतोऽन्तर्गृहस्य तु ॥
ध्वजदण्डो महाबाहु[12] अथवा वास्तुमानतः ॥
मञ्जरीमानतो वाऽपि [13]तद्वद्धनं तथा विभो ॥
पताका[14] च भवेत्कार्या ध्वजवंशावलम्बिनी ॥
देवागारस्य शिखरा त्रिभागपरिमार्जनी ॥
सा चोक्ता दशधा वीरमानतो [15]नामतस्तथा ॥
अङ्कुरः पल्लवश्चैव स्कन्धः शाखा तथैव च ॥

---

१ यस्तु प्र°–क; मु. भ. पु. १३८.१४ २ विषमपर्वणो दण्डादशुभ्रमथोन्नताः–क. ३ जैत्रेयः–मु. भ. पु. १३८.१५ ४ देवा–क. ५ द्वादशहस्तस्तु जैत्रेयः–मु. भ. पु, १३८.१७ ६ कलान्वितः–मु. भ. पु, १३८.१७ ७ °दशधाप्रो अनन्तो–क. ८ स्तथेन्द्रो–मु. भ. पु, १३८.१९ ९ भिन्नो वक्रसन्धितश्च–क; भिन्नो वै वक्रसंधिश्च–स. भिन्नो वक्रोऽसाधितश्च–मु. भ. पु. १०. मूलमन्त्रेण कर्तव्यो अष्टमेनास्तु हन्यते–क. ११ °मन्त्रेण–मु. भ. पु, १३८.२० १२ °हो–क; मु. भ. पु, १३८, २०; स. १३ तदर्धेनाथ वा विभो–क; मु. भ. पु; १३८,२१ तद्वदेनं तथा विभो–स. १४ वै शुभाकार्या–मु. भ. पु. १३८.२१ १५ मानतस्तथा–क.

पताका कदली[1] वीर केतुर्लक्ष्मो जयस्तथा ॥
ध्वजश्च दशमः प्रोक्तः सर्वदेवमयो [2]नृप ॥
अङ्कुरे ध्वङ्गुलः प्रोक्तः पल्लवश्चतुरङ्गुलः ।
स्कन्धः षडङ्गुलः प्रोक्तः शाखा चाष्टाङ्गुला मता ॥
एकादशपताका [3]तु कदली तु चतुर्दश ॥
केतुस्तु षोडशः प्रोक्तो लक्ष्माष्टादश उच्यते ॥
जयो विंशति वै प्रोक्तो विस्तारादङ्गुलानि च ॥
चतुर्विंशो ध्वजः प्रोक्तः पताका द्व्यङ्गुलानि तु ॥
[4]देवागार[5]स्य कुर्यात् प्रथमांशप्रमार्जनम् ॥
अङ्कुरेति पताका सा विज्ञेया यदुनन्दन ॥
पल्लवे[6]ति द्वितीयस्य मार्जनी परिकीर्तिता ॥
त्रिभागमार्जनी स्कन्धः शाखा वै पञ्चमस्य तु ॥
षष्ठस्योक्ता पताका तु कदली सप्त[7]मस्य तु ॥
अष्टमस्य तथा केतुर्लक्ष्मो वै नवमस्य तु ॥
ततश्च दशमस्योक्तो [8]जयन्तो यदुनन्दन ॥
वृषस्थाना च मार्जी च ध्वजस्तु परिकीर्तितः ॥
गजो मेषोऽथ महिषः कबन्ध[9]स्तु ऋषस्तथा ॥
हरिणोऽथ नरश्चैव [10]शरश्च नरसत्तम ॥
स्थानान्येतानि [11]चाष्टौ तु प्रयुक्तस्य ध्वजस्य तु ॥
दिशां भा[12]गात्तु वै पू[13]र्वाक्रमेण परिकल्पयेत् ॥

---

१ °ली केतुः वारलक्ष्मया जयस्तथा–क. २ यतः–क; नृप–ने; व्ययः–मु. भ. पु. १३८.२४ ३ च–क; मु. भ. पु. १३८.२५ ४ देवागारस्य कुम्भस्य प्रसन्ना सा प्रमार्जनी–मु. भ. पु. १३८.२७ ५ °स्य वै कुम्भात् प्रथमं संप्रमार्जनी–क. ६ च–क. ७ °कस्य–क. ८ यजमाना यदूत्तम–क. ९ °मशयस्तथा–क; वृष for ऋष–स; मु. भ. पु, १३८, ३१ १० वृषश्च नर°–क; नरश्च–मु. भ. पु. १३८.३१ ११ भूयोऽथ–मु. भ. पु. १३८ ३२ १२ °गास्तु–क. १३ °र्वाः–क; °र्वात् क्रमेण–स.

एवं दशविधाः प्रोक्ताः पताकास्तत्त्वदर्शिभिः ॥
कर्तव्यास्ता यथा पूर्वं तच्छृणुष्व नराधिप ॥
शुक्लवस्त्रमयी चित्रा सुघण्टा सुमनोरमा ॥
[1]नाना बुद्बुद सम्पन्ना किङ्किणी जालमण्डिता ॥
ध्वजाग्रा[2]श्चैव कर्तव्या देवतालिङ्गसूचकाः[3] ॥
काञ्चनो वाऽथ रौप्यो वा मणिर[4]त्नमयोऽथवा ॥
रङ्गैर्लिखितो[5] वाऽथ तद्वाहनसमाकृतिः ॥
ध्वजदण्डाग्रविन्यस्तः कर्तव्यो यदुनन्दन ॥
गरुत्माँस्तु ध्वजो विष्णोरीश्वरस्य ध्वजो वृषः ॥
ब्रह्मणः पङ्कजं कार्यं रवेः धर्मः स्मृतो ध्वजः ॥
[6]कुञ्जरो देवराजस्य यमस्य महिषो ध्वजः ॥
हंसो जलाधिपस्योक्तः कुबेरस्य [7]नरो ध्वजः ॥
बलदेवस्य तालस्तु कामस्य मकरो ध्वजः ॥
सिंहो ध्वजस्तु दुर्गायाः कीर्तितो यदुनन्दन ॥
गोधा ध्वज उमादेव्या [8]रेवंतस्य हयः स्मृतः ॥
कच्छपो वरुणस्योक्तो वातस्य हरिणो मतः ॥
पावकस्य तथा मेष आखुर्गणपतेः स्मृतः ॥
ब्रह्मर्षीणां कुशः प्रोक्त इत्येषा ध्वजकल्पना ॥
यस्य यो वाहनः प्रोक्तः स तस्य ध्वज उच्यते ॥
विष्णोर्ध्वजस्य सौवर्णो दण्डः कार्यो विचक्षणैः ॥

---

१ नानाचामर°–मु. भ. पु. १३८.३८ २ चैव–क; °ग्रे चैव–मु. भ. पु. १३८.३५ ३ °कः–क. ४ °त्ने परिष्कृतं–क. ५ °तैर्वापि–क. ६ This line is missing in the printed Bhaviṣya-purāṇa. ७ ध्वजो वृषः–क. ८ रैवतस्य–मु. भ. पु. १३८.३९

पताका चाऽपि [1]पीता स्याद्गरुडस्य समीपगा[2] ॥

ईश्वरस्य [3]ध्वजो दण्डो राजतो यदुनन्दन ॥

पताका चाऽपि शुक्ला स्याद्वृषभस्य समीपगा ॥

पितामह[4]ध्वजो दण्डः स्मृतस्ताम्रमयो बुधैः ॥

पद्मवर्णा पताका स्यात्पङ्कजस्य समीपगा ॥

आदित्यस्य च सौवर्णो ध्वजदण्डः प्रकीर्तितः ॥

[5]पञ्चवर्णपताका स्याद्धर्मस्याधो[6]ग्रतःस्थिता ॥

किङ्किणीजालसंपन्ना नानाबुद्बुदसम्मिता ॥

पुष्पमालोपसम्पन्ना [7]नानाराजीवसंवृता ॥

इन्द्रध्वजस्य दण्डोऽथ काञ्चनो यदुनन्दन ॥

[8]पताका बहुवर्णा स्यात् कुञ्जरस्य समीपगा ॥

आयसश्चापि दण्डोक्तो यमचिह्नो विचक्षणैः ॥

पताका वर्णतः कृष्णा महिषस्य समीपगा ॥

जलाधिपध्वजो दण्डो राज[9]तः परिकीर्तितः ॥

पताका [10]सर्वतः श्वेता [11]आरा....स्य कथ्यते ॥

ध्वजे चापि कुबेरस्य दण्डो मणिमयः स्मृतः ॥

पताका [12]चापि रक्ता स्यान्नरपादसमीपगा ॥

बलदेव[13]ध्वजा दण्डो राजतो यदुनन्दन ॥

पताका वर्णतः शुक्ला तालस्याधोगता स्मृता ॥

कामध्वजे त्रिलोहः स्याद्दण्डो यदुकुलोद्वह ॥

---

१ तस्योक्ता–क. २ °गा। आदित्यस्य च सोवर्णा–क. ३ ध्वजादण्डो–स. ४ °ध्वजादण्डः–स. ५ पञ्चवर्णा पताका–स. ६ °गता नृप–क. ७ नानावादिभिरावृता–मु. भ. पु; १३८.४६ ८ यत्किंचित् बहुवर्णाया कुंज°–क. ९ °तो यदुनन्दन–क. १० वस्तुतः क्लृप्ता हंसस्याधोगता मता–क. ११ विचित्रा सा च कथ्यते–मु. भ. पु, १३८.४९ १२ तीरनक्तस्य सुरपादप समीपगा–क. १३ °ध्वजे दण्डो–मु. भ. पु. १३८,५१

पताका रोहिणी तत्र मकरस्य समीपगा ॥
मयूरं कार्तिकेयस्य चिह्नं लोकेषु गीयते ॥
त्रिलोहदण्डमारूढं बहुरत्नविभूषितम् ॥
बहुवर्णकचित्रा तु पताका कथिता बुधैः ॥
[1]हस्ति [दन्तभवं] दण्डं [2]तथा कुर्यात् गणपतेर्नृप ॥
ताम्रदण्डसमारूढं सुशुद्धं सुप्रतिष्ठितम् ॥
शुक्ला पताका कर्तव्या सुप्रमाणा महीपते ॥
मातॄणां चापि कर्तव्यो नैकरूपो ध्वजो बुधैः ॥
पताकाभिरनेकाभिर्बहु[3]वर्णाभिरन्वितः ॥
[4]रेवन्तस्यापि कर्तव्यो [5]ध्वजे [6]वाजि नराधिप ॥
रक्ता पताका तत्रापि कर्तव्या यदुनन्दन ॥
चामुण्डामन्दिरे कार्यः शिरोमालाध्वजस्तथा ॥
नीला पताका कर्तव्या दण्डो लोहमयस्तथा ॥
रीतीमयश्च मातॄणां रेवन्त[7]स्याऽपि कारयेत् ॥
[8]गोध्वजस्ताम्रम[9]यः पताका गोपसन्निभा ॥
स्वर्णद[10]ण्ड........ध्वजो मेष[11]समन्वितः ॥
पताकाबहुवर्णाद्या कर्तव्या यदुनन्दन ॥
अश्मसारमयो दण्डो ध्वजो वानरस्य [12]उच्यते ॥
पताका कृष्णवर्णा तु हरिणस्य समीपगा ॥
[13]भगवत्यध्वजे दण्डः सर्वरत्नमयः स्मृतः ॥

---

१ हस्तिदन्तभवं दण्डं कुर्याद्गणपतेर्नृप–मु. भ. पु. १३८.५४ २ कक्षात् कुर्यात्कुलपतेर्नृप–क; तथा कुर्याद्गण°–स. ३ °रत्नाभि°–मु. पु. ४ एवं तस्यापि–क. ५ ध्वजो वाजी–मु. भ. पु. १३८.५७ ६ वाजी–ने; स. ७ °स्य च–क. ८ गोधारी ध्वजस्ताम्रामयः–स. ९ °यी–क. १० °डो वीरस्य–क; स्वर्णदण्डस्तुवीरस्य–मु. भ. पु, १३८.६० ११ समंततः १२ °शस्यते–क. १३ भागवत्या ध्वजे–ने; सु. भगवत्या ध्वजो–मु. भ. पु. १३८.६२

पताका च त्रिवर्णा स्यात्सिंहस्याधो[1]गता नृप ॥
एवंविधमिदं कृत्वा ध्वजं लक्षणलक्षितम् ॥
अधिवास्य ततो राजन् तत आरोपयेद्बुधः ॥
ततः सर्वौषधीभिस्तु स्नापयित्वा प्रयत्नतः ॥
समालभ्य च बध्नीयान्मध्ये प्रतिसरं [2]नृपः ॥
कल्पयित्वा शुभां वेदीं कलशैरुपशोभिताम् ॥
तस्यां वेद्यां समारोप्य तां [3]रात्रीमधिवासयेत् ॥
नानाकुसुमचित्रां तु [4]स्रजं तस्यावलम्बयेत् ॥
अभ्यर्च्य च प्रयत्नेन धूपमस्य निवेदयेत् ॥
बलिकर्म ततः [5]कुर्यात्कृशरा[6]मोदकादिभिः ॥
[7]पललोल्लोपिकाभिश्च दधिपायससूपकैः ॥
उद्दिश्य लोकपालेभ्यो बलिं दत्त्वा च पायसैः ॥
ब्राह्मणान् स्वस्ति वाच्याऽथ कृत्वा पुण्याहमङ्गलम् ॥
वादित्रकृतनिर्घोषं [8]वेष्टितं नववाससा ॥
शुभे लग्ने दिने ऋक्षे ध्वजमारोपयेद्बुधः ॥
विन्यस्य स्वर्ण[9]कलशं [10]शुभ्रं राजं ध्वजस्य तु ॥
एवमारोपये[11]द्यस्तु ध्वजं देवालयोपरि ॥
श्रियमातनुते नित्यं प्राप्नोति परमां गतिम् ॥
असुरा वस्तुमिच्छन्ति ध्वजहीने [12]स्वरालये ॥
तस्माद्देवालयं प्राज्ञो ध्वजहीनं न कारयेत् ॥

---

१ °मता नृप कल्पयित्वा शुभां वेदीं–क.  २ नृपम्–स.  ३ तां रात्रिमधिवासयेत्–स.  ४ स्रजस्तस्यावलक्षणम्–क.  ५ कृत्वा कृशरापूपकादिभिः–क.  ६ °पूप–मु. भ. पु. १३८.६७  ७ पलालापूपिकाभिश्च–मु. भ. पु. १३८.६७  ८ जलपुष्पोपसंकुलम् । नानाबुद्दबुसम्पन्नं वेष्टितं मितवाससा । शुभलग्न–क; जलं संस्कारसंयुतम् । नानाबुद्बुदसम्पन्नं वेष्टितं नववाससा–मु. भ.पु. १३८.६९  ९ कलशे–ने.  १० शुभ्रेरजेध्वजस्यतु–क; श्वभ्रराजं ध्वजस्य तु–मु. भ. पु. १३८.७०.  ११ °द्विष्णु–क.  १२ सुरा–क; ने; मु. भ. पु. १३८.७२

मन्त्रश्च स्थापने प्रोक्तो विधानज्ञैर्ध्वजस्य तु ॥
"[1]एह्येहि भगवन्देव देववाहन खेचर ॥
'श्रीकर श्रीनिवासेश जैत्र' जेत्रोपशोभित ॥
[2]व्योमरूप महारूप धर्मात्मन् नमोऽस्तु ते ॥
सान्निध्यं कुरु दण्डेस्मिन् साक्षी च ध्रुवतां व्रज ॥
कुरु वृद्धिं सदा कर्तुः प्रासादस्यार्कवल्लभ ॥

ॐ एह्येहि भगवन्नीश्वर[3]विनिर्मित उपरिचर वायुमार्गानुसारिन् ॥

श्रीनिवास रिपुध्वंस [4]उपरिनिलय सर्वदेवमयाव्यय कुरु सान्निध्यं शान्तिं स्वस्त्ययनं मम भवतु सर्वविघ्ना अपसरन्तु ॥

मन्त्रेणानेन राजेन्द्र श्वभ्रे दण्डं निवेशयेत् ॥
पताकां पूर्वमन्त्रेण स्थित्वा पूर्वमुखो नृप ॥
क्षिपेदूर्ध्वमथाकाशं प्रासादशिखराद्वि[5]भो ॥
[6]पताकां तु ततः पश्येत्पतन्तीं यदुनन्दन ॥
प्रासादपुरतो वीर पताका[7] पतते यदि ॥
इन्द्रलोकं तदा [8]कर्तुरादिशेद्यदुनन्दन ॥
आग्नेयामग्निलोकं तु याम्यां यमसदो भवेत् ॥
नैर्ऋत्यां [9]नैरितां लोकं वारुणे वारुणं व्रजेत् ॥
यस्य देवस्य यद्वेश्म कृतं यदुकुलोद्वह ॥
तस्य लोकमवाप्नोति वृषःस्थानं गतो यदि ॥
वायव्ये वायुमाप्नोति सौम्यां[10] च सोममाप्नुते ॥

---

१ °क्षादेवध्रुवं ध्वज–क. २ चापरूपं महारूप–क; °रूप महारूप धर्मामोद्य नमोद्य नमोस्तु ते–स. व्योमरूप महारूप धर्मात्मंस्त्वं च वैगते मु. भ. पु १३८.७४ ३ वितिनिर्मित उपरि धारा–स. ४ यक्षनिलय –मु. भ. पु. १३८–७६ ५ °भोः–मु. भ. पु. १३८ ७८ ६ यजमानः ततः पश्येत् पताकां–मु. भ. पु. १३८.७८ ७ °कां पातयेद्यदि–मु. भ. पु. १३८.७९ ८ कर्ता विशेद्वै–मु. भ. पु. १३८.७९ ९ नैर्ऋतं लोकं–स. १० °यां सोममाप्नुयात्–क; °यां–मु. भ. पु. १३८.८२

ऐशान्यामीशमाप्नोति [1]कर्ता वै देववेश्मनि ॥

[2]य एतत्कारयेद्भक्त्या ध्वजस्यारोपणं रवेः ॥

[3]सहभुक्तान् परान् भागान् सूर्यलोके महीयते ॥

तेजसा[4]ण्डजसंकाशः [5]कीर्त्या चाम्बुजसन्निभः ॥

[6]द्विजाङ्कतुल्यः प्रभया विक्रमे[7]ण च गोपतेः ॥

---

१ कर्तव्या देववेश्मनः–क. २ यत्र तत्कारयेद्भक्त्या–क. ३ इहभुक्तान्–क; स हि भुक्त्वा°–मु. भ. पु. १३८.८३ ४ °बु°–मु. भ. पु. १३८.८४ ५ कान्त्या चाम्बुज°–क; कान्त्या°–मु. भ. पु. १३८.८४ ६ द्विजातितुल्यः–१३८–अध्यायश्च समाप्तः * १३८ अध्यायः समाप्तः। ७ °णाथ–क.

# अथ जीर्णलिङ्गोद्धारः ॥ १६ ॥

[[1]तत्र] भविष्यपुराणे—

**विष्णुरुवाच ॥**

अतः परं प्रवक्ष्यामि साधकानुग्रहं [2]भुवि ॥
जीर्णलिङ्गस्य विधिवदुद्धारं शास्त्रचोदितम् ॥
जीर्णं कालेन महता प्रचलेदासनाद्यदि ।
धरण्यां वा मृदुत्वेन प्रासादपतनेन वा ॥
वारिणा भिन्नमूलं वा दग्धं वा क्षयमागतम् ॥
पतितं वा परावृत्तं लिङ्गमाहुर्भयानकम् ॥
यथा शीर्णा नराः प्राणान् सन्त्यजन्ति तनुक्षये ॥
शिवो जीर्णं तथा लिङ्गं सन्त्यजेदविचारतः ॥
यथा शिवस्तथा सूर्यो [3]व्योममर्चां विशेषतः ॥
[4]विभग्नो पूजयेद्यस्तु भोजको भास्करीं तनुम् ॥
विशेषतः पद्महीनां स याति नरकं परम् ॥
अन्याश्च विविधाकाराः प्रतिमाः शैलदारुजाः ॥
[5]वर्जनीयाः प्रयत्नेन साधकैः शिवलिङ्गवत् ।
आत्मनः शिवकामेन [6]राज्ञस्तद्विशेषतः ।
[7]मन्त्रेण लिङ्गमुद्धार्य यथावद्विधिपूर्वकम् ॥
ब्राह्मणान् शिवभक्तांश्च भोजयित्वा यथाविधि ।

---

१ [illegible] तत्र नास्ति—क. २ प्रति—क. ३ मध्यमार्चि विशेषतः—क. ४ This line omitted in—क; विभग्नां—ने; स. ५ वर्जयित्वा प्रयत्नेन—क. ६ यज्ञस्तद्विषयस्य च—क. ७ मन्त्रिणो लिङ्गमुच्छ्रायं—क.

प्रीयतां शिव इत्युक्त्वा दक्षिणाभिश्च पूजयेत् ॥
[1]दर्भाल्लाजांश्च गन्धांश्च धूपपुष्पबलिं पुनः ॥
आहृत्य स्नापयेल्लिङ्गं [2]जयाशैर्मङ्गलैस्तथा ॥
शङ्खवादित्रनिर्घोषैर्वेदगीतस्वनैस्तथा ॥
प्रगृह्य ताम्रकलशं तोयपूर्णमकुत्सितम् ॥
सर्वबीजानि गन्धांश्च धान्यं चैव यथोदितम् ॥
सर्वाणि चैव रत्नानि वृषभं च हि[3]रण्यकम् ॥
प्रक्षिप्य कलशे तस्मिन् दर्भविष्टरसंयुतम् ॥
अनुद्विग्नः शुचिर्भूत्वा मन्त्रमेतमुदाहरेत् ॥
'जीर्णलिङ्गं परित्यज्य महेश्वर सुराधिप ॥
[4]पूर्णैस्तु कलशैर्देवं स्नापयामि वृषध्वजम् ॥'
इत्युक्त्वा मन्त्रविद्देवं स्नापयित्वा समाहितः ॥
सम्पूज्य गन्धमाल्यैश्च बलिं कृत्वा तु भक्तितः ।
वृषस्य ककुदा गृह्य शिवलिङ्गं प्रचालयेत् ॥
गोधामरज्जुसूत्रेण समेन सुदृढेन च ॥
द्वि[5]जः सम्पूजनं गृह्य तल्लिङ्गं उदके सन्निधापयेत् ॥
अग्नौ च तं क्षिपेद्देवं घृताभ्यक्तस्ततःपरम् ॥
ब्राह्मणान् पुरतः कृत्वा मन्त्री संयमितेन्द्रियः ॥
ततस्तु [6]गुरवे दद्यात्स्थापकस्य यथो[7]चितम् ॥
वृषभैकादश गाश्च [8]दद्याद्वस्त्रयुगाष्टकम् ॥
शय्यासनसुवर्णादिभूमिरत्नानि कुण्डले ॥

---

१ दूर्वाला°–क. २ जयाशीर्म°–ने. ३ हिरण्मयम्–क. ४ पूर्णैस्तु कलशै°–स.
५ जः संगृह्य तल्लिंगं उदके सन्निधापयेत्–क; द्विजः सं°–स. ६ दक्षिणा द°–क. ७ °थार्चिता–क.
८ दद्यादस्त्रयुगाष्टकम्–स.

ततस्तु गुरवे दद्याद्गन्धमाल्यपवित्रकम् ॥
इत्येवं धातुर[1]त्नानां शैलजानां समासतः ॥
लिङ्गानां जीर्णभिन्नानां परित्यागविधिः स्मृतः ॥

**देवीपुराणे—**

**ब्रह्मोवाच ॥**

पुरा देवैर्यथा देवाः स्थापिताः पूर्वधर्मिभिः ॥
ते तथा पूजनीयास्तु [2]मगराद्याः सुरोत्तमाः ॥
यथा शिवोद्भवं लिङ्गं चालितं भयदं भवेत् ॥
एवं सूर्यहरिब्रह्मा चालिता भयदाः स्मृताः ॥
सर्वभूमण्डली[3]कार्येये देवाः सन्निवेशिताः ॥
ते तथा पालनीयाश्च चालितास्त्वशुभावहाः ॥
देवार्चा नैव सञ्चाल्या मृन्मयाऽपि भयावहा ॥
हेमाददोषदा वत्स पूर्वामुद्धृत्य स्थापिता ॥
[4]वृद्धिकामभि[5]याशु जासु स्थिता स्थितिः ॥
महादुर्भिक्षजननी [6]मरका वृष्टिदा भवेत् ॥
कर्तृगोत्रस्य भयदा रिपुवृद्धिविवर्द्धिनी ॥
शीर्णो देवालयः[7] कालाद्यदा सञ्चालयेत्क्वचित् ॥
[8]भैरवे भित्तिकूलादिविलेखाच्चलितः क्वचित् ॥
तदा लिङ्गविधानेन यावत्प्रासादसंस्थितिः ॥
निष्पत्तिर्भवति स्थाने तत्र तावन्महोत्सवः ॥
[9]कर्तव्यं प्रत्यहं देवे प्रतिष्ठावत्प्रवेशनम् ॥

---

१ °रत्नानि–क. २ मङ्गलाद्याः सुरो°–क. ३ °कार्ये ये देवाः–क. ४ स्थापिता वृद्धिकामीभि° पांशुजा स्वस्तिकास्थिति–क. ५ मकरा वृष्टिदा भवेत्–क; ने. ६ °भियांशुतासुस्थिता–नें; °भियां शुजासु स्थिता स्थितिः–स. ७ ये काला यदा संचालयते क्वचित्–क. ८ भैरवाद्यादिकुलादिविशेषाच्चलिभा क्वचित्–क; भैरवो–स. ९ This line omitted in क.

निम्नेऽप्येवं विधिं [1]कृत्वा प्रासादं कल्पयेत्पुनः ॥
[2]शिलान्यासादिविधिवद्विधिं कुर्याद्यथोचितम् ॥
इत्येवं बहुशास्त्रज्ञैः ख्यातोऽयं मनुजादिभिः ॥
लिङ्गे हस्ताश्च कर्तव्याः प्रतिमायास्तथोच्छ्रयः ॥
अथ वा सिद्धदेवानां नन्द्यादिविहितौकसाम् ॥
महापूजाविधिं कृत्वा यागं रु[3]द्रकुमारवत् ॥
शिवाद्याः पूजयित्वा तु प्रासादं कल्पयेत्पुनः ॥
शिलान्यासादिविधिव[4]द्विधिं कृत्वा यथोचितम् ॥

तथा

**वसिष्ठ उवाच ॥**

मातृस्तु भैरवं दुर्गां शीर्णवेश्मसमन्विताम् ॥
प्रासादं चालयित्वा तु कुर्याद्यस्तु द्विजोत्तमः ॥
पक्वेष्टदारुशैलं वा तस्य पुण्यविधिं शृणु ॥
शिवब्रह्मेन्द्रविष्णूनां सवितुश्च द्विजोत्तम ॥
[5]नान्तः शस्यते मार्गो मातॄणां भैरवस्य च[6] ॥
दुर्गायाः सर्वकालं तु मातॄणां चैव चालनम् ॥
[7]नवभेदाः समाख्याता मातॄणामेत [8]एव हि ॥
आसां तु नायिका देवी चामुण्डा [9]रुरुघातिनी ।
तस्यास्तु चालनं कुर्यात पुण्याहे [10]वारभेन्नरः ॥
ई[11]शिखा वज्रपाणिर्वा सदमनी वामना ॥

---

१ ख्यातो मनुजादि निरोशते–क. २ क omits this śloka. ३ °कुमारकं–क. ४ °वत् ततः कुर्याद्यथोदितम्–क. ५ नोत्तरः शस्यते सार्धो मातॄणा°–क. ६ वा–क. ७ न च भेदाः क. ८ °तदेवहि–क. ९ °चण्ड–क. १० चारभेद्विजः–क. ११ ईशिका–क.

[1]भालाननिहिता चासां हृदया मातृजा शिवा ॥
ततः सङ्गमतोयेन स्नापयित्वा [2]विनिक्षिपेत ॥
[3]पशुरक्तं विमिश्रं च मद्यं सद्यःकृतान्वितम् ॥
[4]दत्त्वा दिक्षु समस्तासु चालयेदम्बिकां ततः ॥
[5]अधिपोष्याथवा मन्त्री यदा चालयते शिवाम ॥
[6]तदा क्षेमं विजानीयाद्राजा [7]पाति वसुन्धराम ॥
चालिता दक्षिणां नेया नोत्तरां तु दिशं नयेत् ॥
पूज्यमाना सदा वत्स यावत्प्रासादसिद्धयः ॥
निष्पन्नेषु मुहूर्तेषु प्रतिष्ठाविधिमारभेत् ॥
प्रतिमां तु यदा जीर्णां पीठिकां वाऽपि चालयेत् ॥
हृदयं मोहयित्वा तु तदास्याश्चालनं भवेत् ॥
हेमलाङ्गूलकं कृत्वा शिवा चाल्या विपश्चिता ॥
बाणरज्ज्वा निबद्धा तु वृषस्य ककुदा द्विज ॥
क्षीरवृक्षादधस्तात्तु कृत्वा वाचां महीं न्यसेत् ॥
शीर्णां महाम्भसि क्षिप्त्वा तदा चाऽन्यां निवेशयेत् ॥
प्रतिष्ठाविधिमाश्रित्य सर्वं कुर्याद्द्विजोत्तमः ॥
स्वेन स्वेन विधानेन मन्त्रैश्चाङ्गसमुद्भवैः ॥
स्थापयेद्देवतां वत्स मातॄणां मातृको विधिः ॥
[9]शीर्णो देवोऽथप्रासादो यैः पुनः संस्कृतो द्विज ॥
अशोच्यास्ते महात्मानो धूतपापा महाधियः ॥
मूलाच्छतगुणं पुण्यं प्राप्नुयाज्जीर्णकारकात् ॥
तस्मात्सर्वप्रयत्नेन जीर्णस्योद्धारमाचरेत् ॥

---

१ चालनं नैव हि तासां हृदया मातृजा शिवा—क. २ बलिं क्षिपेत्—क. ३ पशुरक्तविमिश्रं च—स. ४ दद्याद्दि—क. ५ आविष्टाप्यथवा मन्त्री शिवदा चालये—क; अधिपोऽप्यथवा—स. ६ तदा क्षेमं विजानीयात्—स. ७ याति—क. ८ °म—ने; स. ९ शीर्णो देवोऽथ प्रासादो—स,

शून्यो देवालयो वत्स यस्मिन्देशेऽपि तिष्ठति ॥
भयं तत्र विजानीयाद्दुर्भिक्षात्तस्करादिभिः ॥
जीर्णं गेहं यथा देही त्यक्त्वा चाऽन्यत्समाश्रयेत् ॥
प्रासादं देवताजीर्णं त्यक्त्वान्यत्र व्रजेत्तथा ॥
तस्मिञ्शून्येऽपि वा देवा आश्रिता भयदा नृणाम् ॥
उद्वासयन्ति तत्स्थानं कलिं कुर्वन्ति दारुणम् ।
शोच्यास्ते भयविन्यस्ताः स्युर्लोका नात्र संशयः ॥
गृहोपसृष्टा विद्विष्टा यान्ति नाशं समन्ततः ॥
तस्माद्वत्स स कार्यं पूजार्थं नान्यथा न्यसेत् ॥
देवं देव्यादयश्चापि जीर्णेन च निवेशयेत् ॥
यथा सदा भवेत्पूजा तथा कार्यं विपश्चिता ॥
कर्ता शताधिकं मौलं प्राप्नुयादविचारयन् ।
राजा षष्ठं समाप्नोति प्रजा राष्ट्रं च सिध्यति ॥
मूलादष्टगुणं पुण्यं जीर्णसंस्कार[1]के भवेत् ॥
तस्मादनाथजीर्णेषु कार्यं संस्करणं मुने ॥
अनाथा वा सनाथा वा पूजनीयाः सदा सुराः ॥
विशेषेण तु संपूर्णास्ते पूज्याः शतशो [2]मुने ॥

## [3]इति कृत्यकल्पतरौ प्रतिष्ठाकाण्डं सम्पूर्णम् ॥

## शुभमस्तु ॥

---

१ °कं--ने. २ मुने । इति महाराजाधिराज श्रीमद्गोविन्दचन्द्रराज्यो भट्टश्रीहृदयधरात्मज महासान्धिविग्रहिक भट्टश्री लक्ष्मीधरविरचिते कृत्यकल्पतरौ प्रतिष्ठाकाण्डस्समाप्तम् ॥ शुभमस्तु ॥ "क"
३ इति श्रीमहाराजाधिराजगोविन्दचन्द्रसान्धिविग्रहिक श्रीलक्ष्मीधरभट्टविरचिते कृत्यकल्पतरौ प्रतिष्ठाकाण्डः पूर्णः ॥ शुभमस्तु--ने; स.

इति श्रीमहाराजगोविन्दचन्द्रसाधिविग्रहिक श्रीलक्ष्मीधरभट्टविरचिते कृत्यकल्पतरौ प्रतिष्ठाकाण्डः सम्पूर्णः ॥

संवत १९०५। फा. शु. १३ गुरौ शुभमस्तु ॥
श्रीगोविन्दपदारविन्दमशुभस्कन्दाय वन्दामहे ॥

पुस्तकमेतन्मूलपुस्तकमनुसृत्य यथाविधि संशोधितं तथापि गच्छतः स्खलनन्यायेन शैघ्र्यादनवस्थानाद्वा या यास्त्रुटयश्शिष्टाः स्युस्तास्तास्संशोधयन्तु मर्षयन्तु च गुणैकपक्षपातिनो धीराः। अत्र मूलपुस्तकेऽपि बहुत्राक्षरक्षतिर्विद्यते तत्पूर्तिस्तु तत्तत्स्मृतिपुराणादिश्लोकविरोधाभावायनव्यधाम्। बहुत्रार्षप्रयोगेषु पुष्पचिह्नं बोध्यम् ॥ नार्थो बहुलेखनेनेति शम्।

इति विज्ञापयति—

**विठ्ठलनाथशास्त्री।**

वैशाखकृष्णदशमी १८८२ रवौ—